संस्कृत-साहित्य-परिषद्ग्रन्थमालायाम् ३३

# शार्दूलशकटम्

## प्रकरणम्

डः वीरेन्द्रकुमारभट्टाचार्येण

विरचितम्




संस्कृत-साहित्य-परिषत्

राजा दीनेन्द्र ष्ट्रीट, कलिकाता-४

१९६९

मूल्यम्—रूप्यकत्रयम्

## Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1.

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushana. Re. 1·25; (Out of stock).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan Rs. 2·50 ; Rs. 2. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2·50. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; ·75 P ( for. members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. ·25 P

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri. M. A., B. L., Ph. D. Re. 1·50; Rs. 1·25 (for members) (Out of stock ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. ·88 P, ·62 P (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2·50 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. ·75 P ; 50 P (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. 1·50 Re. ; Re, 1·25 ( for members ).

14. **Nala-damayantiyam** (a new Drama ) of MM. Kailpada Tarkacharya. Rs. 2 ; Rs. 1·50 (for members) (out of stock)

15. **Prashastapada-bhashyam**—Edited by MM. Kalipaad Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

# शार्दूलशकटम्

प्रकरणम्

( स्त्रीभूमिकावर्जितम् )

डाः वीरेन्द्रकुमारभट्टाचार्येण

विरचितम्

कलिकातास्थ-संस्कृत-साहित्य-परिषदा स्वीयद्रव्यव्ययेन

प्रकाशितम्

मूल्यम्— साधारणानाम् ३·०० मुद्रामात्रम्
परिषत्सदस्यानाम् २·७० मुद्रामात्रम्

## कुशीलवाः

| | |
|---|---|
| आदिशूरः | सर्वाध्यक्षः |
| विश्वनाथः | मुख्यपरिचालकः |
| निर्माल्यः | चालनाधिकारिकः |
| श्यामाङ्गः | मुख्यश्रमाधिकारिकः |
| अमिताभः, इन्द्रनीलः, रत्नाकरः, अमृतः, दिवाकरः, निशापतिः, दायुदः, सुरिटा | श्रमिकनेतारः |

परिचालकः, श्रमिकाः, आज्ञावह इत्यादयः ।

## उत्सर्गः

यत्संस्थाकर्मिसेवा प्रगुणकुशला काम्या हि नियतं
कृत्स्ना नित्योन्नतिश्च प्रथमकरणं मन्यत इह नः ।
निन्दा यस्या दुनोति प्रथितिवचनं प्रीणाति च मनः
तस्यै सन्तर्प्यते मे प्रकरणमिदं शार्दूलशकटम् ॥

# निवेदनम्

राष्ट्रीयपरिवहणकर्मिणां जीवनमवलम्ब्य रचितं प्रकरणमिदं शार्दूल-शकटाख्यं सविनयं समर्प्यते विबुधरञ्जनाय नाट्यकारः स्वयं प्रवहणसंस्थाधिकारिकः। श्रमिकाणां मङ्गलविधानं च तस्मै भूयसा रोचते। अतस्तेषां वास्तवानुगं जीवनचरितं वर्णयितुमेव प्रचष्टतेऽत्र सः। न जाने काव्यगुणादीना कृतिरेषा विदुषस्तोषयितुं शक्नोति न वेति। परन्तु संस्कृत-साहित्य-परिषत्-पत्रिकायां प्रकरणमिदं सम्पादकार्यमिश्राणां सस्नेहकृपाहेतोः प्रकाशितपूर्वम्। अतः क्वचित् विदग्धान्तरेभ्योऽपि रोचते दिष्ट्या।

ग्रन्थकारस्य प्रथमं नाटकं कविकालिदासं विद्वद्भिः परमादरेणैव गृहीतं निखिलभारतप्राच्यविद्यासम्मेलनस्य रजतजयन्तीमहोत्सवे पण्डितवर्यैरभिनीतं च। युगवृत्तान्तसूचकेन मञ्चोपस्थापनीयेन नाटकेन नूनं प्रयोजनमस्ति। तथापि दृश्यकाव्यमेतद् रसोत्तीर्णम् उत हास्यास्पदम् इत्यस्मिन् विषये पाठकानां दर्शकानां च मतं प्रभवति न खलु ग्रन्थकारस्य उद्देश्यम् आशा वा। वास्तवानुगे दृश्यकाव्ये श्लोकप्राचुर्यं मनागसाम्प्रतम्। कवितारचनप्रीतेरेव तत् कृतम्। अभिनयकाले वहवः श्लोकाः परिहर्तव्याः। प्रकरणस्य नवं रूपं स्तोकेनापि प्रशस्यते चेत् प्रयासमेतं सार्थकं गणयिष्यामि।

संस्कृत-साहित्य-परिषत् मत् पुस्तकं प्रकाशयति स्नेहातिशय्येन इति मे महानानन्दः परमं गौरवं च। प्रेमार्णं कृतज्ञतावचसा कः परिशोधवितुं क्षमः? परिषत्-सम्पादकानां श्रद्धेयानां स्मरामः प्रीतिमुग्धाः। अलमतिविस्तरेण।

श्रमिकजनकथैव वर्णितव्या<br>
न धनवतां लिखितं मनो विचित्रम्।<br>
तमसि सुखरुचिर्न दीनलभ्या<br>
रसलघुता यदि वा किमत्र चित्रम्॥

कलिकातायां<br>
रासपूर्णिमायां<br>
१३७६ वङ्गाब्दीयम्

विनीतस्य<br>
ग्रन्थकारस्य

# प्रथमाऽङ्कः

—प्रस्तावना—

वैकुण्ठवासं विहाय द्वापरे विश्वपालको विष्णुः
मर्त्ये ततार व्रजानां सद्मसु प्राह धर्मसन्देशम् ।
धृत्वा च पाणौ रथाङ्गं पाप्मनो यो जघान निःशेषं
भक्तेन स्पृष्टः स नित्यं प्रीयतां पार्थसारथिर्जिष्णुः ॥१॥

( नान्द्यन्ते ) सूत्रधारः—अभिनन्दये रङ्गालयमण्डनं विदग्धमण्डलम् । वागाडम्बरेणालम् । अथ खलु उपस्थाप्यतेऽत्र वीरेन्द्रकुमारभट्टाचार्येण विरचितं शार्दूलशकटनामकम् अभिनवं प्रकरणम् ।

पुर्यां वङ्गानां जनबहुकलिकातायां
राष्ट्रायत्ता या परिवहणविधिः संस्था ।
शार्दूलालेख्यैर्द्रुतगतिशकटास्तस्या
राजन्ते लब्ध्वा भ्रमणरतनॄणां चार्हाम् ॥२॥

( नेपथ्याभिमुखम् अवलोक्य )

भद्र चन्द्रचूड, अपि सम्पन्नं ते नेपथ्यविधानम् ? तदागम्यतामत्र सत्वरम् । विलम्बितेन अनादरं यास्यति वरणीया संसदियम् ।

( प्रविश्य ) चन्द्रचूडः—आगतोऽस्मि द्रुतचारेण । आर्य, किं करणीयमधुना ?

सूत्रः—भद्र, रसिकवृन्दं प्रीणयामो नवनाट्योपहारेण । तत् सम्यग् आयोजनं कर्तव्यम् अञ्जसा ।

चन्द्रः—किं नु नाटकं रोचते संसदे रुचिभूयिष्ठायै ?

सूत्रः—भद्र, शृणुष्व भूतार्थम् ।—

महाकालो विश्वे चलति तरसा नाचला मर्त्यभूमिः
पुराणाः पन्थानो निखिलमनुजैश्चाधुना नाद्रियन्ते ।
नवीनैः काम्येते नवयुगकथा नूतनं दृश्यकाव्यं
गता ग्रन्थाः प्रायो रसकृपणतां प्राक्तना नान्यहेतोः ॥३॥

अतो नवेन नाटकेन अभ्यर्चनीयाः समागता रसिकवृन्दाराः। शार्दूलशकटं हि प्रयोज्यतामद्य साहित्यसूरिप्रथितम्।

चन्द्रः—किमेष कविकालिदासरचयितुरन्यतरः प्रयासः ?

सूत्रः—अथ किम्। प्रथमं नाटकं तस्य पण्डितैर्गृहीतं सादरम्। बन्धवश्च तं नवयुगोपाख्यानरचनाय प्राणोदयन्। अतः स प्रवहणसंस्थाकर्मिणां जीवनयात्रां वर्णयितुं चेष्टमानो नाटकमिदम् अरचयत्। विक्रमपुर्या विशालायास्तथाधुनिकनगर्याः कलिकाताया महान् प्रभेदो वर्तते।

क्व गतयुगगरिष्ठा राजधानी ह्यवन्त्याः
क्व च नवकलिकाता वङ्गदेशस्य रिक्ता।
गुणिसदसि तथापि व्यज्यते तन्नगर्याः
परिवहणरतानां वर्णना स्नैग्ध्यसिक्ता ॥४॥

चन्द्रः—भाव, प्राकृतजनानां जीवितं प्रायेण ग्रन्थकारैरवहेलितम्। कविरयं तेषु स्निह्यति नितरामिति मन्ये।

सूत्रः—साहित्यसूरिः राजपुरुषः राष्ट्रियपरिवहणसंस्थानां सर्वाध्यक्षश्च। अतः स सहकर्मिणां दैनन्दिनजीवनालेख्यं रचयितुं प्रवृत्तः। जीवनीकारेण खलु अन्तर्जीवनं ज्ञातव्यं नो चेत् निष्फला भवेत् रचनाप्रचेष्टा।

न जातु कविना भवेद् विदितमत्र तथ्येप्सुना
नृणामवरचारिणां निभृतजीवनं दुःखदम्।
परन्तु हृदयानि यो विशितुमन्तरेण क्षमः
स एव कुरुते क्वचिच्चरितचित्रणं सार्थकम् ॥५॥

चन्द्रः—अस्ति मे काचिद् जिज्ञासा। परिवहणसंस्थाभित्तौ नाटके सर्वाध्यक्षस्य भवेत् श्रेष्ठभूमिका। तत् छिद्रान्वेषिभिर्नाटकस्य निन्दा विधीयेत इति मे शङ्का।

सूत्रः—नान्यः पन्था विद्यतेऽत्र। अजानता रचकेन कथं तथ्यवर्णनं स्यात्।

कीर्तिकिरीटं प्राप्नोतु कविः किंवा निन्दालाञ्छनं
ग्रन्थनिकारस्तिष्ठेत् सुचिरं लुप्तिं वा तूर्णं गतः।

तथ्यधृतानां काव्यानि सदा प्राज्ञानां स्युः रञ्जनं
वस्तुविरूपं कुर्याद्रचको चिन्तामात्रे संरतः ॥६॥

चन्द्रः—पितृदेवेन मम प्रोक्तमेकदा—

सुलभाः पुरुषा लोके विद्वांसः प्रेमिकास्तथा ।
स्निह्यति वित्तहीनेषु यो ज्ञानी स सुदुर्लभः ॥७॥

सूत्रः—तथ्यमुक्तं तव जनकेन । परन्तु हृदयहीन एव श्रेष्ठवित्तेन हीनः । अपि च विद्याया ज्ञानस्य महान् भेदोऽस्ति—

न सा परा विद्या यया न दीयते ज्ञानं
न तद् भवेद् ज्ञानं न येन दीप्यते चित्तम् ।
न चित्तभा रम्या यदा तु वर्तिका क्षीणा
क्व वर्तते स्नेहं विना नु शक्तियुक्ता सा ॥८॥

चन्द्रः—प्रीतिरेव भवति चिरमन्तश्चारिणी । श्रुतं च मया—

पार्थिववित्तराजेर्हि चिन्मयं विशिष्यते द्रविणम् ।
सुवेशो राजा नमति शिरसा मुनिं चीरधारिणम् ॥९॥

सूत्रः—तथाप्येतद् वक्तव्यम् । देहधारणाय प्रयोजनमस्ति लौकिकधनेन । छद्मविरागो नूनं विषादस्य प्रभवः । अपि च बहवो जिह्महृदया दरिद्रान् चिरदैन्यपाशेन बद्धुमिच्छन्ति । धनवैषम्यापनोदनं सर्वेषामेव कर्तव्यम् ।

अन्तर्दधाति वसुधा कनकादि वित्तं
सर्वं तदेव निहितं प्रसवाय तस्याः ।
लुब्धास्तथापि धनिकाः खलवृत्तिवश्या
दैन्यं नयन्ति हि जनं बलकूटरिक्तम् ॥१०॥

चन्द्रः—कथं न सर्वे शक्तिहीना मिलित्वा स्वाधिकारं गृह्णन्ति ?

भवति सदैकस्तन्तुः
क्षीणो यतः स कृत्यते करनखैः ।
मत्तकरी नियतं तु
बध्यते सूत्रचयेन माणवकैः ॥११॥

( नेपथ्ये जनता )—

चिरं जीवतु विप्लवः !

चिरं जीवतु विप्लवः !!

चन्द्रः—किमर्थोऽयं कोलाहलः ?

( नेपथ्ये पुनरपि )—

जयतां विप्लवप्रयासः ।

जयतां श्रमिकप्रचेष्टा !!

सूत्रः—प्राकृता जना आगच्छन्ति अत्रैव रक्तपताकाम् उत्थाप्य अग्रतः । गच्छावो द्रुतं स्थानमेतत् परित्यज्य । पथिस्थापणाभ्यन्तरे स्थित्वा शोभायात्रां पश्यावः । आगच्छ, चन्द्रचूड़,

आत्मज्ञानं श्रमिकजनश्चेत्
प्राप्नोतीह स्वनियतिवेद्यम् ।
संघो जिष्णुर्भवति नितान्तं
नान्यः पन्थाः कलियुगसंख्ये ॥१२॥

चन्द्रः—सत्वरं यास्याव इतः ।

( निष्क्रान्तौ )

—इति प्रस्तावना—

( ततः प्रविशति जनताशोभायात्रा )

सर्वे—( युगपत् )—

चिरं जीवतु विप्लवः !

जयतां श्रमिकश्रवः !!

दिवाकरः—बन्धवः, गायत विप्लव-सङ्गीतम् अस्मदीयम् ।

( सर्वे गायन्ति )

विप्लव-सङ्गीतम्

मार्गं दर्शयन्ति विद्युतो नः प्रोज्ज्वलाः
धरण्यां ध्वनन्ति मेघमन्द्रा मर्दलाः
न सूर्यो न चन्द्रो दत्ते ननु रश्मेर्लेशम्।
पन्थानः करालकण्टकैः संवर्धिताः
झञ्झाः पीडयन्ति वञ्चितान् वर्षान्विताः
न मन्दानिलो गीतं वा विनिहन्ति क्लेशम्॥
लक्ष्मीर्यच्छति क्व हास्यदीप्तामाशिषं
खद्योतोऽपि किं नु दर्शयेद्वा स्वार्चिषं
न वन्धुर्न मित्रं कुर्वीत च दिङ्निर्देशम्।
वह्निर्विप्लवस्य लोलजिह्वो भास्वरः
सन्दह्य क्रमेण दुःखभाजामीश्वरः
विनश्यतु चक्रं विद्वेषिणां नो निःशेषम्।
दिगन्ते व्रजामो रात्रिन्दिवं लक्ष्योद्देशम्॥१३॥

दिवाः—प्रियसङ्गिनः, अद्य खलु सम्मिलिता वयं सर्वेशिल्पश्रमिका आधुनिकं कर्तव्यं स्थिरीकर्तुम्। शिल्पपतयः सर्वे एव भूयिष्ठं गृध्नवः। अस्मच्छ्रमार्जितं धनं कृत्स्नप्रायं पुञ्जीकुर्वन्ति ते कोषागारेषु स्वदेशस्य तथा भिन्नदेशानां च। स्वल्पपारिश्रमिकं ददति अस्मभ्यं यथोच्छिष्टं कुक्कुरेभ्यो भोगविलासिनः। क्षुधार्ता वयं परिहितचीराश्च नग्नकवत्। ते तु भोज्यं पानीयं च भुञ्जते प्रभूतं परिदधति च वसनानि चीनांशुकानि महार्घाणि। भारतशासनविधिस्तु धनसाम्यं प्रचारयति सर्वजनहिताय। परन्तु धनिका मुखेन तस्य महिमानं गायन्तः कार्येषु तद्विपरीतमेवावलम्बन्ते। छलेन वलेन कौशलेन च ते दासत्वप्रथां द्रढयन्ति। तत् किं श्रमिका भिक्षां याचन्ते चिरेण किमुत ऊर्ध्वमवलोक्य स्वप्रलोकस्थान् देवान् आह्वयन्ति वैषम्यदूरीकरणाय? मन्ये विश्वामराः सुधां पीत्वा सुखेन स्वपन्ति विज्ञान-

वर्तिदीप्त्या वा छायावद् विलीयन्ते झटिति। अतः श्रमिकैः आत्मभाग्यं स्वकरैरेव विधातव्यम्।

न कुर्वन्ति प्रभवः क्रीतदासस्य रज्जुमोचनं
क्व यच्छन्ति व्यसने संरताः प्रार्थिने तथा पयः।
मुमुक्षुस्त्वत्र यदा श्रृङ्खलं कृन्तति स्वपादयोः
तदा स्यान्मानकरं जीविकार्थं श्रमार्जितं धनम् ॥१४॥

निशापतिः—सखे दिवाकर, मत्प्रभुस्तु परमदयाशीलः स्वकर्मिषु स्निह्यति च नितराम्। तत् सर्वे शिल्पाधीशा न कदापि निष्ठुरा व्यसनमग्ना वा।

दिवाः—कथमेतत्? निशापते, प्रकृत्या एव शत्रवोऽस्माकं धनपतयः। केचन तेषु भवन्ति कौशलिनः। अतः उच्छिष्टेन तोषयन्ते कतिपयान् श्रमिकान् भेदनीतिसाफल्यहेतवे।—

श्रमिका यदि यान्ति परां मुदं
धनवतः परिलभ्य कृपाञ्जनम्।
हिमतां लभते नयनांशुकं
तरलविप्लववह्निरनुष्णताम् ॥१५॥

निशाः—नाहं कस्यापि शिल्पपतेः कृपाकणां लिप्सुः। परन्तु सत्यमप्रियमपि वक्तुकामोऽहम्। एतच्च चिन्त्यतां सर्वमपि श्रमिकान्दोलनं सत्यभित्ति-स्थापितत्वादेव सफलतां यास्यति। अलीकमूलं निलयं क्रीडापत्रप्रासाद-वत् सहसा पतति भूमौ दुर्बलाघातेनापि। "सत्यमेव जयते" इति च भारतसंविधानस्य मूलमन्त्रः। भारतीयं गणतन्त्रं नानुकरोतु कस्यचिदपि राष्ट्रान्तरस्य पद्धतिम्।—

अङ्कुरं भवेत्तरुर्यथास्थलं हि रोपितं
वर्धते नृणां शिशुः शनैः शनैः सुपोषणात्।
दीप्यते नरैर्नगैस्तथा मतैश्च निश्चितं
स्थानकालसङ्गतैः प्रलीयते तु दूषणात् ॥१६॥

विजातीयो मतवादो न कल्पते सुखाय क्षेमाय वा। "परधर्मो भयावहः" इति गीतायां च सम्यग् उदाहृतम्।

दिवाः—नैतद् योग्यस्थानं मतवादविचारणस्य। परन्तु सत्यं न कदापि कुत्रापि वा सीमितं प्रयोगार्थम्। न च भारतवर्षं निखिलतत्त्वानाम् अद्वैतम् उत्पत्तिस्थानम्।—

सत्यं देदीप्यते नित्यं सर्वदेशान्तेषु
नास्ति क्षीणोऽपि प्राच्याप्राच्ययोर्भेदोऽत्र।
विज्ञा गृह्णन्त्यतस्तत्त्वानि स्वसौकर्यार्थं
मन्त्रद्रष्टा मतः कालस्थानपारंगो यः ॥१६॥

धनतन्त्रवादो लप्स्यते विनाशमचिरेण सर्वत्र। आयातः कालः श्रमजीविनां कर्मणो मूल्यनिर्धारणस्य।—

विचित्रं दृश्यते हि दरिद्रभागधेयं धरित्र्यां
न शिल्पेशैः कदाच विधीयतेऽर्थसृष्टिः स्वहस्तैः।
श्रमजीवैस्तथापि चिराय लभ्यते स्वल्पवित्तं
प्रभूतं प्रसूयते तु बलेन कौशलाद्वा धनाढ्यैः ॥१८॥

दायुदः—किमत्र चित्रं, सखायः, श्रुतं मयाप्तवाक्यं 'वीरभोग्या वसुन्धरे'ति।

सुरिटा—कथं धनाढ्या वीराख्यां लभन्ते? कामं कौशलिनस्ते जम्बुकसदृशाः परन्तु शार्दूलशिशव इव शूरवराः श्रमाजीवाः। न वञ्चिता वयं दैहिकबलेन वित्तौजसा वा।

हलैः कर्षन्ति भूमिं प्रस्तरीभूतां सदैव श्रमिकाः
विशन्ति त्रासहीनाः सिन्धुगर्भं पार्थिवं वा जठरम्।
गिरिं लङ्घन्ति तुङ्गं यन्त्रशिल्पे दर्शयन्ति स्वगुणं
न वीराख्यां लभन्ते ते कथं शक्तिव्रता ये पुरुषाः ॥१९॥

निशाः—कथं तद् वयं दुर्बलपदवीं गताः? न तेजस्विनो याचन्ते कृपालवं कस्मादपि।—

न शक्तिमद्भिः श्रीयते हि याच्ञा
क्व वा द्विषद्भ्यः करुणा च लभ्या ।
छलं बलं वा परकौशलं नो
जयं प्रयच्छेत् समरेषु दिष्ट्या ॥२०॥

दिवाः—बलं तु बहुरूपमेव ।—

बलं बाहुशक्तिस्तथा मानसं तेज-
श्छलं गूढवीर्यं नराणां कृशाङ्गानाम् ।
रणे कौशलं स्यान् महौजः सुसेनान्यो
बलं चित्ररूपं वृणीते जयार्थी यः ॥२१॥

आत्मज्ञानविहीनाः सर्वे तु श्रमिकाः । अथ जानीत आत्मानं सर्वथा । परन्तु ब्राह्मणैर्विहिता या गुहाविवरसाधना सा परिहर्तव्यास्माभिः । किमत्र प्रमाणम् ?—

सुतृप्तवाञ्छैर्ध्रियतां विरागो
युक्तः स मर्त्यै धनपोषितानाम् ।
सन्न्यासकल्पः स्वक-वञ्चितानां
विनाशनार्थो ननु छद्मरागः ॥२२॥

निशाः—भूतार्थं कथितं नेतृवरेण ।—

प्रांशुतरुक्रोडस्थितवल्लया
योऽयतत द्राक्षाफलमाप्तुम् ।
अम्लमिदं नेच्छामि स आह
कुञ्जवनं त्यक्त्वा विफलार्थः ॥२३॥

शक्तिमतामेव त्यागो विधीयते भोगतृप्तानां न कदाचन वञ्चितानां बलहीनत्वात् ।

दिवाः—अतो वञ्चितैः श्रमिकैर्विश्वासो न कर्तव्यो धनिकवाक्येषु ।—

श्रमिकान् वित्तमदांस्तथान्तरा
नियतं तिष्ठति गुह्यगह्वरम् ।

न युगान्तेऽपि महेन्द्रजालिको
दृढसेतुं रचयेद् वहत्तमम् ॥२४॥

अमृतः—अहं राष्ट्रियपरिवहणकर्मी । राष्ट्रियप्रतिष्ठानानि न तु धनतन्त्रवादं प्रचारयन्ति । सार्वजनिकसम्पत्तिरेव अस्माकं संस्था । आधिकारिकैश्च श्रमिकस्वार्थः कदापि नावमन्यते । परन्तु अर्थाभाव एव अस्माकम् अधिकारान् वाधते ।

युधिः—सर्वे आधिकारिका न समदृष्टयः । दिष्ट्या लब्धोऽद्य अध्यक्षो यः पक्षपातशून्यः सुविचारकः श्रमिकहितार्थी च ।

दिवाः—न भवेत् सर्वदा एतादृशं भाग्यम् । अतः श्रमिका एव स्वशक्तिवर्धनाय यतेरन् । शक्तिश्च संघसंहतिः, नान्यः पन्था विद्यते अयनाय । रात्रिन्दिवं श्रमिकमङ्गलं चिन्तयामः ।—

उल्का दद्यान्नस्तिमिरसरणौ प्रत्यहं दीप्रदीपं
झञ्झा कुर्वीत प्रबलरभसा क्षिप्रयानांश्च सर्वान् ।
विद्युज्ज्योतिर्नो ज्वलतु नयने वज्रसारीभवन्तु
मर्माण्यस्माकं समरविजयो निश्चितः संघशक्तेः ॥२५॥

निशाः—तच्चलामो द्रुतं संगीतमुखरा दुर्गप्रान्तराभिमुखम् ।

दिवाः—गायन्तु सर्वे जयगीतिम् ।

सर्वे ( गायन्ति ) वाद्यं ध्वनतु विमर्द्य मलयं
हर्षः स्वनतु विमथ्य हृदयं
यास्यामो वीथिं नृत्यचारेण कम्पयित्वाऽवनीम् ।
चित्ते ज्वलतु सुतीव्रोऽनलः
हस्ते वसतु तनोर्दृढबलं
गास्यामो गीतिं कम्बुकण्ठेन मुग्धसञ्जीवनीम् ।
दास्यामः प्रीतिं सज्जनेभ्यश्च विश्वहृत्प्लावनीम् ॥२६॥

## द्वितीयोऽङ्कः

### —प्रवेशकः—

( तारातलाशकटागारस्थः परिचालकः )

परिचालकः—कर्मिणः कर्मविरतये यतन्ते अद्य मच्छकटागारे। न जानामि कारणं तस्याः। करणिकभवनस्य कतिपयानां कर्मचारिणां वर्तनकर्तनं कारितं मन्त्रिमण्डलाज्ञया। परन्तु प्रतिष्ठानम् अस्मदीयं स्वतन्त्रमेव। कथं तत् कर्मिणोऽत्र कार्यविरतिम् अवलम्बन्ते, नगरीपान्थानां क्लेशप्राप्तिः नूनञ्च भविष्यति। यावदहम् उपचालकं पृच्छामि रहः कारणम्। ( घण्टाध्वनिं करोति )

( ततः प्रविशति आज्ञावहः )

आज्ञावहः—नमस्ते महोदय, को निदेशो मां प्रति ?

परिचालकः - उपचालकाय मे नमस्कारं विज्ञापय।

आज्ञावहः—यदाज्ञापयति भावः।

( निष्क्रान्तः )

परिचालकः—तरुणोऽपि मदाज्ञावहः स्वनियोगं यत्नेन विदधाति। पूर्ववङ्गादागतः शरणार्थी सः। संस्थायाः कर्मिषु बहवः शरणार्थिनः सन्ति, येषां पुनर्वासनाय भिषक्श्रेष्ठेन विधानचन्द्रेण प्रतिष्ठानमिदं स्थापितम्। मदाज्ञावहो धनाढ्ये परिवारे जातः। देशभागात् परतः पूर्ववङ्गे तस्य गृहाणि कृषिक्षेत्राणि च हस्तच्युतानि। अतः स सर्वहीनो भूत्वा अत्रागतः। तस्य कर्मस्पृहा प्रशंसनीया। तथापि किमत्र चित्रम् ?

प्रशस्ते वंशे यो जगति लभते जन्म सुजनो<br>
भवेत् पुष्टो बाल्याद् बहुविधविलासैश्च नियतम्।<br>
यदि स्यात् पश्चाद्वा स नियतिवशाद् वञ्चितधन-<br>
स्तथाप्यार्यो नूनं प्रकटयति चित्तं शुचिरतम् ॥२५॥

[ ततः प्रविशत्युपचालकः ]

उपचालकः—सुप्रभातं, भाव !

परिचालकः—सुप्रभातं, दिङ्नाग ! किं श्रमिकैः कर्मविरतिरथ कल्प्यते ?

उपचालकः—बाढम् ! मदादेशो न श्रूयते उत्तेजितैस्तैः । अथ नगरारक्षका आनेतव्याः ।

परिचालकः—मैवं मैवं क्रियताम् । एतेन कुफलमेव लभ्यते ।

अष्टादश क्षतानि प्राप्णोति मन्दभाग-
स्तं चेन्नखाः स्पृशन्ति व्याघ्रस्य किञ्च दन्ताः ।
आरक्षकात् तथैव प्रायेण संलभन्ते
न प्रार्थितं परन्तु क्लेशाष्टकं विपन्नाः ॥२६॥

—अतोऽहं मुख्यपरिचालकं विज्ञापयामि । (दूरभाषणयन्त्रं गृहीत्वा) हंहो ! (श्रुत्वा) दूरभाषणसरणिर्न मुक्ता । तत् मुख्ययन्त्रज्ञाय निवेदयामि वार्ताम् । (दूरभाषणयन्त्रं गृहीत्वा) हंहो ! हंहो ! (श्रुत्वा) एषा सरणिरपि नियोजिता विकलीभूता वा । किं करोमि ? क्व गच्छामि ? सर्वेषां निन्दाभाजनं भविष्यामि । विफलतां गता मे प्रयासाः शकटागारस्य श्रीवृद्धये !

चलन्ति शकटा यदा किमपि विघ्नपातं विना
फलं मम महत्कृतेः सकलकर्मिभिर्गृह्यते ।
परन्तु यदि गर्हितं भवति भाग्यदोषात् क्वचित्
स्वयं हि परिगण्यते पिशुनतास्पदं मादृशः ॥२७॥

न लभे साहायकम् ऊर्ध्वतनाधिकारिकेभ्यः । दौर्भाग्यं मम कः शक्नोति वारयितुम् ?

कृत्वा श्लाघ्यं परमैर्हि प्रयत्नै-
र्लब्धं नित्यं यदि निन्द्यापवाक्यम् ।
नार्हा विद्या मतं पौरुषं वै
विश्वाराध्यं गणयामि स्वभाग्यम् ॥२८॥

( ततः प्रविशति सर्वाध्यक्षः )

[ परिचालक उपचालकश्च उत्थाय नमस्कुरुतः ]

आदिशूरः—किं घटितमत्र ? संवादः प्राप्तो मया—कर्मिणः सर्वे कार्यविरतिम् आश्रितवन्त इति ।

परिचालकः—आर्य, किमपि न घटितमत्र । परन्तु करणिकभवनस्य कर्मिणां समर्थनाय सर्व एते कर्मविरतये चेष्टमाना आसते ।

आदिशूरः—( सस्मितम् ) तथापि न घटितं किमपि ? आयातम्, नीचैर्गत्वा विशद-विवरणं लभेमहि—

विस्फोटकैर्नो विहितं व्यलीकं
क्षुद्रैः स्फुलिङ्गैः क्रियते दवाग्निः ।
तुच्छा वितण्डा जनयन्ति संख्यं
छिद्रेष्वनर्था बहुलीभवन्ति ॥२६॥ ( निष्क्रान्ताः सर्वे )

—इति प्रवेशकः—

( ततः प्रविशन्ति कतिपयाः श्रमिकाः )

अमृतः—भो भ्रातरः, मन्त्रिमण्डलेन करणिकभवनस्थितान् अस्मद्‌बन्धून् प्रति न सुविचारः कृतः । न्यायपथेन संग्रामे रताः कर्मिणो विताडिताः । अतोऽस्माभिः किं कर्तव्यम् ? किं वयं पश्यामस्तेषां दुर्दशां स्वनेत्राभ्याम् अनुत्थाप्य कनिष्ठाङ्गुलिमपि ? किं न साहाय्यं दीयते श्रमिकेभ्यः श्रमिकैः ?

सर्वे—कथं न दास्यामः साहायकम् ?

धनञ्जयः—अस्माकं पन्थाः सुनिर्दिष्टः—

श्रमिका नः पितरः पितामहास्तथा
भुवनस्य श्रमिका भवन्ति बन्धवः ।

ह्रियते येन धनं द्विषास्मदीयकं
प्रतिशोधं लभतां स एव जाल्मकः ॥२६॥

अमृतः—साधु साधु धनञ्जय, महाभारतस्य अर्जुनेन तुल्यस्त्वमेव। परन्तु न प्रतिशोधार्थं स्वाधिकाररक्षार्थमेव कर्मविरतिम् आश्रितवन्तो वयम्। उत्तिष्ठत भ्रातरः, जागृत श्रमिकाः, न विरमत तावद् युद्धाभियानाद् यावन्न साफल्यमर्जितम्—

अस्तित्वरक्षार्थमेव संग्राम एष नः
शत्रुर्गरीयान् बलेन बुद्ध्या तथा धनैः।
सर्वां स्वशक्तिं प्रयोज्य संघं च युध्यतां
मृत्युं प्रशस्यं लभेत किंवा जयस्रजम् ॥३०॥

[ ततः प्रविशति सर्वाध्यक्षः ]

आदिशूरः—( सस्मितम् ) कथं युद्धे प्रणोदयति सर्वान् शान्तिप्रियः श्रीमान् अमृतः ?

अमृतवचनं नित्यं हि स्याज् जनान्तररञ्जनं
रणमदकलं तस्मिन् मन्ये स्वभावनिराकृतम्।
ज्वलति तपनो दीप्रज्योतिः सदैव निरञ्जनं
न शशिकलया रुद्रं रूपं निदाघ अपि श्रितम् ॥३१॥

अमृतः—( नमस्कृत्य सस्मितम् ) महोदय, क्षम्यताम् अविनयो मम, परन्तु आयातः कालो रणप्रस्तुतेरेव।

आदिशूरः—कथमेतत्, अमृत ? युष्माकं संस्थायाः सर्वाध्यक्षः सर्वेषां शुभाय एव प्रयतते रात्रिन्दिवम्। अपि च, अन्यान् श्रमिकान् प्रति सहानुभूतिप्रदर्शनस्य नैष विधिः। शकटचालनविरतेः हेतोः निर्दोषाः पान्थजना महाक्लेशं प्राप्नुवन्ति संस्थायाश्च स्यादर्थहानिर्भूयसा।

अमृतः—को जानाति अस्मद्दुःखनिरसनस्य पन्थानम्। कश्च यच्छति

असमभ्यं जीवनधारणोपयुक्तं वर्त्तनम्? आयवृद्धये यतमानान् अस्मान् सर्वे मन्यन्ते विघ्नकारिणः। उभयसङ्कटमापन्ना वयमद्य—

तूष्णीमास्ते श्रमिकपरिकरो यद्यपि क्षान्तिकामो
बुद्धिच्छन्नैर्धनमदकृपणैर्मन्यते शक्तिहीनः।
न्यायान्वेषी छलकपटतया दीयते दास्यदाम
दुर्दैवं नश्वरणविदलितः पूज्यनेता प्रवीणः ॥३२॥

आदिशूरः—अविचारः खलु कृतो मां प्रति एतादृशवाक्येन। अप्येतत् कर्मिसंघस्य अभिप्रेतम्?

अमृतः—भवन्तं बहु विगणयन्ति सर्वे श्रमिकाः। परन्तु राजदृष्टिरतीव वक्रा क्रूरा च।

आदिशूरः—नास्ति मे अधिकारस्तद्विचारणस्य। तथापि वदामि मन्त्रिमण्डलेन न धनतन्त्रं संश्रितम्, अपि च संस्थोन्नतिरेव मम नित्यसाधना। कथं नु श्रमिकाः संस्थाया हानये यतन्ते पान्थांश्च क्लेशयन्ति प्रचण्डातपे ग्रीष्मकाले? नेदमुपयुज्यते परिवहणकर्मिषु—

अन्तर्विरोधो यदस्ति तदस्तु प्रशासककर्मिणोः
संलापशस्त्रैः क्रियेत विवादस्य निःशेषखण्डनम्।
पान्थैस्तु हानिः कदापि न संस्थाजनस्य समर्थ्यते
मार्गश्रितानां नृणां न वयं कल्पयाम विडम्बनम् ॥३३॥

अमृतः—तवादेशो मे शिरसि धार्यश्चिरेण। (अन्यान् उद्दिश्य) भो बान्धवाः, अद्य खलु अस्मत्सर्वाध्यक्षः परिवहणसंस्थायाः पिता अत्रागतः। अनिशं तत्रभवान् प्रयतते प्रतिष्ठानोन्नतिहेतवे अस्मत्सौख्यविधानाय च। आगच्छत सर्वे, प्रचालयत शकटानि।

तूर्यमाह्वयतु सर्वपान्थान् तूर्णं ते रोहन्तु रथ्यां
घर्घरं ध्वनतु चक्रनेमिः सन्तोष्यास्माकं मनांसि।
व्याघ्रचिह्नशकटाः सरन्तु प्रीत्यै क्लान्तानां नराणां
सञ्जयाय सुचिरं समन्ताद्वृद्धिं यायाद्राज्यसंस्था ॥३४॥

आदिशूरः—साधु साधु अमृत, अमृतमेव वर्षति त्वन्मुखात्।

अमृतस्य वाक्यमतीव मिष्टं
सखीनां करोति स शुभमिष्टम्।
सदा मन्यते विषवत् परुषं
लीलया जहाति मन्दपुरुषम् ॥३५॥

धनञ्जयः--विजयताम् अस्माकं सर्वाध्यक्षो वीराग्रगण्यो धीरोदात्तश्च। तत्-स्नेहच्छायायां दिष्ट्या वर्धते नः परिवहणकल्पतरुः।

सर्वेः—विजयताम् अस्माकं सर्वाध्यक्षः सुचिरम्।

अमृतः—

कर्मिणां मङ्गलं मन्यते यः स्वमङ्गलं
सिद्धये चेष्टते खिद्यते दुःखदर्शनात्।
आत्मनः पौरुषं बुद्धिमत्तां तथा चिरात्
संनियोज्य स्वतः कांक्षते कर्मिणे फलम् ॥३६॥

आदिशूरः—अलं प्रशंसया, बन्धवः, विजयध्वनिना चालम्। परिवहण-संस्था तथा कर्मिणश्च जयन्ताम्। संस्थाजय एव मद्विजयं सूचयति। यस्मात् कस्मादपि प्रतिष्ठानानि ज्यायांसि—

आयान्ति प्रयान्ति बहवो ह्याधिकारिकाः
संस्थायां कदापि घटते वाञ्छितं न वा।
भित्तिर्भूयते तु नियतं कर्मचारिभिः
संस्थामङ्गलं च सकलेभ्योऽतिरिच्यते ॥३७॥

—अतोऽहं ब्रवीमि संस्थाविजयं गायत न तु व्यक्तिविशेषजयम्। भवतु, परमः सन्तोषो लब्धो मयाऽत्र। यास्याम्यथ गङ्गातीरस्थं शकटा-गारम्, यत्र च विषमं समुपस्थितम्।

( निष्क्रान्तः )

परिचालकः—सर्वाध्यक्षस्य आगमनेन मद्विपत्तिर्निराकृता।

अमृतः—कथं वयं तदादेशस्य विपरीतम् आचरामः ? परमं स्निह्यति स सर्वकर्मिषु ।

धनञ्जयः—अन्ये च सर्वाध्यक्षा दृष्टा अस्माभिः । तत्रभवान् आदिशूरः द्वे कर्मिसंघे प्रति निरपेक्षताम् अवलम्बते स्वीकृतसंघाय च यथायोग्यं सम्मानं यच्छति । अपराधिविचारव्यापारे च तेन सौमनस्यं सौहृद्यं तथा दर्शिते । अतः अन्तर्विवादा दूरीभूताः कर्मिणश्च निरलसं स्वनियोगं कुर्वन्ति सर्वत्र । संस्थाया आर्थिकावस्था सुष्ठुतरा जाता पान्थानां सेवा च भूयिष्ठम् रम्यतरा ।

अमृतः—प्राक्तना अध्यक्षा मुख्यतः कलिकातापरिवहणस्य कार्ये व्यापृता आसन् । परन्तु आर्यादिशूरो दुर्गापुरसंस्थायाः तथा उत्तरवङ्ग-संस्थायाश्च सर्वाध्यक्षः । पश्चिमवङ्गस्य सर्वासामेव राष्ट्रपरिवहणसंस्थानां दायित्वं तत्स्कन्धे समर्पितम् । अतः कर्मरतस्तत्रभवान् रात्रिन्दिवम् अतन्द्रितः ।

धनञ्जयः—नगरपरिचालनकेन्द्रस्य अवेक्षक एकदा उक्तवान्—प्रत्यहं तत्रोपनीतः प्रथमप्रश्नं जिज्ञासते सः—कति शकटानि निर्गतान्यद्य इति । आगमन-काले प्रायशः स एव प्रथमः, परन्तु निष्क्रमणकाले तद्विपरीत एव ।

अमृतः—अतो मया भणितं तत्रभवान् परिवहणसंस्थाभारं दुर्वहं वहति परमानन्देन । तस्य धर्मश्च न देवाराधना परन्तु केवला कर्मसाधना । श्रुतं तन्मुखाद् एकदा—

धर्मो मे नियतं नियोगनिरतिर्नान्योऽस्ति देवव्रतः
कार्ये वै कलयामि कालमखिलं सुप्तस्तथाऽतन्द्रितः ।
रात्रौ वा दिवसे स्वकार्यकुशलाः श्राम्यन्ति ये कर्मणे
तुष्टैस्तैर्हि समर्थ्यते मम कृतं स्निह्यन्ति तेऽस्मिन् जने ॥२८॥

उपचालकः—कर्मिसुखचिन्तोऽपि स विश्रृङ्खलां प्रति खड्गहस्तः । रवीन्द्र-सरस्तटस्थस्य शकटागारस्य परिचालकं यदान्यत्र स प्रेरितवान् तदा-

देशपरिवर्तनाय प्राचेष्टन्त भूयिष्ठम्। परन्तु सोऽब्रवीत्—संस्थायाः सर्वाङ्गीणं हितमेव मम काम्यं न तु एकतमस्याङ्गस्य केवलम् इति—

शकटनिचयसंस्था काननं कान्तवेषं
विविधकुसुमवर्णैः रञ्जितं राजधान्याः।
सकलतरुलतानां वर्धनं चेदशेषं
तृणकिशलयपुष्पैः रच्यते श्रीर्वनान्याः ॥३६॥

परिचालकः—प्रमाणीकृतमेव तद्वचनम्। उन्नतिशिखरमारोहति शनैः शनैः संस्थेयं प्रतिदिनम्। उन्नतिश्च नूनं सर्वात्मिका नैकदेशिका—

संस्थाया ऋद्धिर्भवति नियतं नास्ति कुत्रापि हानिः
नैपुण्येनात्र श्रमिकपुरुषाः कर्म कुर्वन्ति सुष्ठु।
पान्था भ्राम्यन्ति स्खलषितपथे नाद्य निन्दन्ति यानं
मिथ्या पुर्यां न द्रुतगशकटा रम्यनामाङ्कयुक्ताः ॥४०॥

उपचालकः—न केवलं द्रुतगशकटा महिलार्थरथाश्च नामानि धारयन्ति विचित्राणि—

मञ्जुस्वना विहरते शनैः नृत्यैर्यथा कलापी
मन्दाकिनी नगरवर्त्मगा मन्दारिका हसन्ती।
कामं न गुञ्जति मधुव्रता नारीमनस्तथापि
सर्वे रथा रुचिरनामभिर्मन्ये सदा जयन्ति ॥४१॥

अमृतः—संवादपत्रेषु भूयिष्ठा निन्दा तथा प्रशंसा च विहिता नामकरणस्य। परन्तु न सम्पादकैस्तथा यथा पत्रलेखकैस्तद्विधं कृतम्। तथापि सर्वाध्यक्षः स्व-सिद्धान्ते स्थिरमतिरस्ति—

सन्ति कीर्तिलिप्सवो नराः पृथिव्यां
ज्ञानकर्मभिस्तु यैर्यशो न लब्धम्।
मुद्रापयन्ति नाम ते सुहर्म्यगात्रे
प्रेरयन्ति च टिप्पणीमुदन्तपत्रे ॥४२॥

धनञ्जयः—परिवहणकर्मिभिस्तु शकटनामकरणं प्रशस्यत एव ।

अमृतः—

निन्द्यन्ते परभृतोऽपि वायसै-
श्चन्दने न रमते भुजङ्गमः ।
पण्डितः क्व लभते खलार्चनं
सर्वथा गुणिजनः सतां मतः ॥४३॥

—नामकरणं सदैव अध्वगसाह्वाय्याय कल्पते । कथं तद् भवेद् रोष-कारणम् ?

परिचालकः—( विहस्य ) अपव्ययप्रतिरोधार्थं महाजना उपदिशन्ति । नामकरणं व्ययबाहुल्याय कल्पत इति वदन्ति ते ।

उपचालकः—जानन्ति न ते-कीदृशो व्ययः क्रियते तदर्थम् । क्षुद्रव्ययनिरोधो न दास्यति श्रमिकेभ्यः प्रभूतमर्थम् ।

नैकनीलकण्ठनृत्यैर्हि वर्षाश्रीरभिनन्द्यते वनान्यां
कोकिलेन सङ्गिहीनेन सङ्गीतं क्व नु रच्यते वसन्ते ।
उञ्छवृत्तिर्विप्रसूनुर्न राजर्षेरभिधां वृणोति मान्यां
स्वल्पसञ्चयस्य हेतोर्न संस्थायाः श्रमिका हितं लभन्ते ॥४५॥

अमृतः—आयवृद्धिरेव श्रमिकहिताय सम्भवति ।

परिचालकः—यावत् सर्वाध्यक्ष आर्यादिशूरो नायातस्तावत् कर्मिणो न महता यत्नेन यात्रिभ्यः प्राप्यशुल्कं गृहीतवन्तः । अथ खलु शुल्कादायः सर्वैरेव क्रियते । कर्मिसंघयोः प्रयासोऽस्मिन् विषये प्रशंसनीयः । स्वीकृतसंघस्य नेतारः परिचालकवर्गेण सार्धं नियतं चेष्टन्ते दुर्नीतिनिरसनाय ।

यदि सारथिर्न कुरुते पथि क्षतिं
शकटे स्वकर्मनिरतो नियामकः ।
पथिको ददाति यदि शुल्कमात्मनो
रथधिः कथं न वृणुते क्रमोन्नतिम् ॥४५॥

—बन्धवः, सर्वान् शकटान् प्रचालयत सत्वरम्। यास्याम्यहं यन्त्रालयमधुना—

मन्थरं चलतु यस्तु योषितां वाहको रथो
रंहसैव शकटं च यत्त्वरायुक्तनामकम्।
स्यन्दनं चितलिकेति सेवतां यात्रिणस्ततो
हर्षणं किरतु पान्थमानसे युग्मयानकम् ॥४६॥

( निष्क्रान्ताः सर्वे )

—इति द्वितीयोऽङ्कः—

## तृतीयोऽङ्कः

( पौरकार्यालये सर्वाध्यक्षः )

आदिशूरः—महान् भारोऽर्पितो मम स्कन्धे राज्यपालेन। कलिकाता-परिवहणसंस्थैव दुर्वहा तथापि दुर्गापुरस्थस्य उत्तरवङ्गस्य च संस्थाद्वयस्य दायित्वं मद्दुर्बलहस्ते न्यस्तम्। रात्रिन्दिवं प्रयते स्वनियोगसाधनाय। न जाने संस्थानां मङ्गलाय मत्प्रयासः कल्पते न वा।

चेष्टेऽहं नित्यं नात्मकष्टं विगण्य
संस्थानामृद्धिं मङ्गलं कर्मिणाञ्च।
कारुण्यं काङ्क्षे दैवतान्नापि कस्माद्
भ्रान्तिः स्यात् कार्ये सञ्जयो मेऽथ दिष्ट्या ॥४७॥

( दूरभाषणयन्त्रं शब्दायते )

( यन्त्रं गृहीत्वा ) हंहो। आदिशूरोऽत्र। पृथ्वीशः? किं वदसि। कर्मविरतिरवलम्बिता श्रमिकैः? किमर्थम्? कर्म्यपसारितः कश्चन दुर्णीतिहेतोः? प्रश्रयो दीयेत असाधुजनाय? भवतु, सुचिरं कार्य-विरतौ स्थितायामपि न क्षन्तव्यो दुष्कृतकारी। शकटयात्रिणां दुर्गति-

भविष्यति ? किं करोमि ? विज्ञापय संघनेतॄन् यद् घटितमथ । कर्म-विरतियैः संश्रिता सर्वे एव शास्ति लभेरन् । नाधिकमस्ति मे वक्तव्यम् ।

( जहाति दूरभाषणयन्त्रम् )—

श्रमिको यदा हि वृणुते व्यलीकाश्रयं
विहितं भवेत् सपदि शास्तिदानं तदा ।
भवतु क्षतिर्विरतिहेतुकाऽसंशयं
जयतां परा जगति सत्यसन्धा सदा ॥४८॥

सत्यं सर्वत्र जयेत न वा, तथापि सत्यमेव आश्रयितव्यं निरन्तरम्—

विजयो लभ्यतेऽस्माभिः कुत्रापि वा पराजयः ।
दैवायत्ता जयप्राप्तिर्मदायत्तस्तु सत्पथः ॥४९॥

( ततः प्रविशति चक्रधारी )

चक्रधारी—नमस्ते आर्य ! नैशयानस्य उद्बोधनव्यापारे विघ्नं समुपस्थितम् ।

आदिशूरः—कथमेतत् चक्रधारिन् ? राज्यपाल एव राजधान्याम् उद्बोधको भविष्यति भुक्तिपतिश्च शिलापत्तने । कुत्र विघ्नपाताद् बिभेषि ?

चक्रधारी—स्वीकृतः श्रमिकसंघो व्याहन्ति शिलापत्तनोत्सवम् । अतो भुक्ति-पतिर्नेच्छति तत्रोद्बोधनम् ।

आदिशूरः—( विहस्य )—

एकदा यो मया सैन्यधुर्यो मतः
स्नेहतः किं च मे चित्तचापल्यतः ।
कल्पनाशङ्कया कम्पते सोऽद्य चेत्
मूषिकायिष्यते जन्तुराजोऽप्यहो ॥५०॥

भवतु, मया तु निमन्त्रणपत्राणि प्रेरितानि सर्वत्र । समयाभावात् निमन्त्रितान् वारयितुं न शक्नोमि । ईदृशी शङ्का च न कल्पते सम्मान-वर्धनाय । भविष्यत्येव असदुत्सवो निर्दिष्टदिवसे यथाकालम् । आहूय श्रमिकनेतॄनत्र मया सह आलोचनाय—

संकल्पो नववर्त्मने मनसि यः प्राङ्मे समुदितो
वास्तव्यं गमयामि कर्मविधिना द्रागेव तमर्हम् ।
शङ्को नात्र ममैष कर्मनिचयः शङ्काछलधृतो
मोघीकर्तुमतो रथाध्वगशुभं सेवाप्रकरणम् ॥५१॥

न कस्यापि हानिः कृता मया। कथमहं बिभेमि कस्माच्चिदपि ? आयोजनं सम्पादय यथानिर्दिष्टम् ।

चक्रधारी—यदाज्ञापयति आर्यः ।

( निष्क्रान्तः )

आदिशूरः— मनसा यदेव चिन्तितं
वचसा मया च सूचितम् ।
लभतां शुभाय तत् सदा
फलं सुकर्मरूपकम् ॥५२॥

( दूरभाषणयन्त्रं शब्दायते )

( यन्त्रं गृहीत्वा श्रुत्वा च ) हंहो पृथ्वीश ! का वार्ता दुर्गापुरसंस्थायाः ? कर्मविरतिर्व्याहता ! श्रमिकाणां सुबुद्धिरुदिता ? तुष्टोऽहमद्य । किं भाषसे ? मार्जनाभिक्षां कुर्वन्ति ते अद्यतनदोषस्य हेतोः ? क्षामये सर्वान् इति विज्ञापय तान् । तुभ्यं च यच्छामि अभिनन्दनम् । प्रीतोऽहं त्वयि नितराम् । स्वभिप्रायो मङ्गलाय कल्पते । दिष्ट्या वर्धतां नवपरिवहणसंस्था । ( यन्त्रं जहाति ) न याति व्यर्थतां शुभबुद्धिप्रणोदितस्य प्रचेष्टा कुत्रापि—

यदा यदा हि भ्रमणं कृतं नरै-
र्विहाय सत्यं पथि पूर्णकल्मषे ।
तदा तदैव व्यसने भवेद् गति-
र्न कुत्र हर्षः सुपथव्रतस्य वै ॥५३॥

( ततः प्रविशति मुख्यपरिचालकः )

विश्वनाथः—आर्यमभिवादये । अपि भवान् कुशली ?

आदिशूरः—सर्वदाहं कुशली। उपविश। कः संवादस्तव प्रतिष्ठानस्य ?

विश्वनाथः—संवादः सन्तोषकर एव। दत्तानि भवता बहुलानि श्रमिकेभ्यः।

आदिशूरः—प्रियमुक्तं विश्वनाथेन, परन्तु न पूर्णतया सत्यम्। श्रमिकानामभावो बहुविधः। मया प्रदत्तं स्वल्पमेव सौख्यम्। प्राप्याणि तेषां न दत्तानि सर्वाणि अद्यापि। आयवृद्धिर्यदि स्यात् तदहम् अन्यानि च दातुमिच्छामि—

भाग्यं सत्यं श्रमिकजनानां वित्तं
सौख्यं तस्मात् प्रभवति किंवा शल्यम्।
नन्देयुर्ये निजकरणीये नित्यं
तैर्हि प्राप्यं जगति भवेत् कैवल्यम् ॥५४॥

लोकहितप्रतिष्ठानमिदं परिवहणस्य। तथापि व्यक्तिगतशिल्पवत् लाभजनकं भवेदिति मे अभिमतम्। राजपुरुषाणां व्यवसायात्मिका बुद्धिर्नास्ति इत्यादीनि वाक्यानि न ध्रुवसत्यानि—

शिल्पादीनां निखिलमनुजैः सर्वसंस्थासु लिप्तै-
र्वित्तभ्रंशः किमु सफलता प्राप्यते कार्यहेतोः।
वासन्ततौ भ्रमरनिकरः पुष्परेणौ समेतो
मत्तैर्भृङ्गैर्न मधु लषितं दंशनस्वप्नचित्तैः ॥५५॥

विश्वनाथः—अतिरिक्तकालकार्यदेयं काम्यते कर्मिभिः। एतदर्थं भवता सह आलोचनां कर्तुमिच्छन्ति ते। प्रतीक्षमाणाः सर्वे मुख्यश्रमाधिकारिकस्य कक्षे वर्तन्ते।

आदिशूरः—( आह्वानघण्टां वादयते ) आह्वयामि तान् अधुनैव।

( ततः प्रविशति दौवारिकः )

मुख्यश्रमाधिकारिकं संघनेतॄन् च तत्कक्षस्थितान् आह्वय।

दौवारिकः—यदाज्ञापयति आर्यः।

( निष्क्रान्तः )

विश्वनाथः—न जाने कति सौकर्याणि मृग्यन्ते कर्मिभिः।

आदिशूरः—

सौकर्याणि बहून्येव तेभ्यो देयान्यसंशयम् ।
अर्थाभावान्न शक्तोऽहं दातुं सर्वाणि साम्प्रतम् ॥५६॥

( ततः प्रविशन्ति मुख्यश्रमाधिकारिकेण सह सङ्घनेतारः )

आदिशूरः—उपविशन्तु भवन्तः । कीदृशः समाचारो नेतृवृन्दस्य ?

अमिताभः—अतिरिक्तकालकार्यदेयमेव काङ्क्ष्यतेऽस्माभिः ।

आदिशूरः—स्थाने भाषितं संक्षेपतस्तथाविलम्बितेन । परन्तु कथं न दत्तमेतद् इतः पूर्वम् ? किं सर्वम् अपेक्षते मत्करक्षेपार्थम् ?

श्यामाङ्गः—अथ किम् आर्य ! भवतैव परिवहणकर्मिविधेः प्राग्लिपिः रचिता । कतिपयानि विधानानि नाद्यापि प्रतिपालितानि ।

इन्द्रनीलः—जानीमः सर्वे वयं भवानेव न्याय्यं दास्यति कर्मिभ्य इति ।

लक्ष्मीकान्तः—अतोऽस्माभिरुपनीतं भवत्समीपम् । उत्तेजितास्तिष्ठन्ति श्रमिका न केवलं शकटागारेषु तथा केन्द्रीययन्त्रालये च ।

आदिशूरः—विधिनिर्दिष्टं प्राप्यं लभध्वे अस्मिन् विषये आगामिमासस्य प्रथमदिवसात् । परन्तु ईदृशं व्ययं लघूकर्तुं सर्वैरेव प्रचेष्टितव्यम् ।

अमिताभः-- प्रतिश्रुतिं यच्छामि संघोपसभापतिरहम् ।

आदिशूरः—युक्तमिदं स्वीकृतसंघस्य । मौखिकप्रतिश्रुतिरेव गृहीत्वा मया सानन्देन । लिखिताङ्गीकारेणालम्—

प्रतिश्रुति र्नियमभृतां मुखोद्गता
प्रवर्तते जगति यथाऽऽप्तवाचनम् ।
विधिर्मतः परिवहणस्य कर्मिणां
जयन्तु ते झटिति ममेति वाञ्छनम् ॥५७॥

विश्वनाथः—अमिताभादयो नेतारः सत्यम् आश्रयन्ते सदैव । अहं विश्वसिमि सततं तद्वचनेषु ।

आदिशूरः—

विश्वासो जनयति मानसेऽनुरागं
प्रेमाङ्का जगति भवन्ति सख्यभावाः ।
बन्धुत्वं सपदि निराकरोति वादं
निर्वादः किमपि धनं सुशिल्पवृत्त्याः ॥५८॥

परस्परविश्वास एव संस्थायाः श्रेष्ठवित्तम् ।

लक्ष्मीकान्तः—भविष्यनिधेर्विषये महार्घदेयं कदा प्रभृति लभेमहे ?

आदिशूरः—( विहस्य ) लक्ष्मीकान्तः किं न जानाति संस्थालक्ष्मीभाण्डारस्य अवस्थाम् ? अस्माकं दैन्यं सुविदितम् । नाधुनैव दातुं शक्नोमि प्राप्यमपि तत् । आयवृद्धिर्न स्यात् चेत् कुत आयाति पर्याप्तोऽर्थः ?

अर्थाभावान्नित्यं संस्थानर्थं भूयिष्ठं
नास्त्यर्थाभावाद्धि ज्यायान् मर्मक्लेशो मर्त्यानाम् ।
वित्तप्राचुर्यं चेत् लब्धं दिष्ट्या सर्वेषामिष्टं
कर्मिक्लेशान्तः स्यात् कान्त्यारामो रथ्यापान्थानाम् ॥५८॥

इन्द्रनीलः—कर्मिणः प्रतीक्षन्ते तल्लाभाय एव । किं वदामस्तान् ?

आदिशूरः—आगामिवर्षस्य प्रथमदिवसात् लभ्यते तत् ।

अमिताभः—प्राप्यतेऽद्य आशामात्रम् ?

आदिशूरः—बाढम् । आशा यत्रास्ति तत्र तृप्तिश्च भवति—

आशाया उत्सः क्षरति नृमनसो नित्यं
जायन्ते तस्मात् सकलकृतिपयस्विन्यः ।
कुर्याद्युत्साहः स्तनितमुखरितं चित्तं
प्रायेण स्याच्च क्रमनिरतजनो धन्यः ॥६०॥

अद्यतनी आशा च प्रतिश्रुतिसंयुता । आशङ्काकारणं स्तोकेनापि न विद्यते ।

अमिताभः—भृशं प्रीता वयं सर्वे । भवतः स्नेहो न विस्मर्यते श्रमिकजनैः ।

नार्थाभावः खलु जगति निकृष्टाभावः
सर्वक्लेशं जनयति कृपणं नष्टवित्तम् ।
श्रद्धार्हाणां भवति च जनताभ्यो लाभो
न प्रीणीते किमिव हि हृदयान्तो वित्तम् ॥६१॥

विश्वनाथः—सन्तुष्टा वयं च सर्वे ।

आदिशूरः—परमानन्दो लब्धो मया । वर्धतां श्रमिकश्रीरुत्तरोत्तरम्—

युक्तचेष्टा कृता यत्र कर्मिभिराधिकारिकैः ।
उन्नतिस्तत्र संस्थायाः च्चीणोऽप्यत्र न संशयः ॥६२॥

इन्द्रनीलः—अस्ति मे पुनरपि वाग्विशेषः ।

आदिशूरः—( विहस्य ) कवेः कालिदासस्य वाक्यस्य प्रतिध्वनिरेव । भवतु, ब्रूहि सत्वरम् ।

इन्द्रनीलः—भवतैव कलिकातापरिवहणस्य परिधिर्वर्धितः । दीघासैकतसेवा सर्वैरभिनन्दिता । समाचारपत्रेषु च प्रशंसा प्रकाशिता तस्याः । खड्ग-पुरस्था पान्थविरामाय स्थापिता शकटरूपा कुत्तिका च स्तुतिमलभत । अनन्तरं वयं काम्यामहे कलिकाता-राँचीसेवा प्रवर्ततामिति ।

विश्वनाथः—अभियानमिदं लाभाय नूनं कल्पिष्यते ।

आदिशूरः—किमहं न तदभियानं कांक्षामि ? परन्तु राजधानीपथिकार्थं सुष्ठुतरा सेवा प्रथमं विधातव्या । तस्याः परतो नवीना प्रचेष्टा क्रियेत—

पथिषु रथसमूहा योग्यगत्या चरन्तु
भ्रमणसुरमसेवा जायतां प्रत्यहं नः ।
जयतु च शकटं यत् सैकतं गन्तुकामं
जयतु नगरवाञ्छा पान्थमोदाय संस्था ॥६३॥

( आदिशूरं विना सर्वे प्रस्थिताः )

जनसेवा एव व्रतं मम । दरिद्रजनेभ्यः दुग्धदानाय मिष्टान्नसंहारविधिः प्रवर्तितः । बहवस्तत्कार्यम् अनिन्दन्, तथापि न विकल्पो मन्मानसे ।

दुर्भाग्यवशाद् हितकरो विधिः दूरीकृतोऽधुना। सीमिता क्षमताऽस्माकं जनहिताय।

कुसंस्कारैः कीर्णा भवति खिलवत् कण्टकैरार्यभूमिः
हतं सत्यं सद्यः सदसि जयवत् सर्वकार्येषु मिथ्या।
यदि स्वैराचारः कथमपि मया भूयते शासकोऽत्र
करिष्याम्यादौ वै कठिननियमैर्दुष्कृतान् बद्धहस्तान् ॥६३॥

किमापतितम् अधुना ? धनं जयति सर्वत्र न विद्या न चारित्रगुणः। अस्माभिर्लब्धा महात्मसदृशाः पथिप्रज्ञा नेतृवरसुभाषतुल्या वीरनायकाः। तथापि तिष्ठन्ति भारतवासिनः अन्यायाचलायतने सेवमाना यथा पूर्वं तथा परम्। क उपायो विद्यते वाञ्छनीयप्राप्तेः ? आयाति तमिस्राच्छन्ना रजनी नाम्बरे राजन्ते तारकाश्चन्द्रो वा। दीपशिखा च निर्वापिता प्रभञ्जनेन। तथापि परिवहणकर्मिणो न यान्तु पादमेकं सन्मार्गं परित्यज्य कदापि—

सेवन्तां मे सखायः पान्थान् सदा वीतशोकं
सार्धं तैश्च प्रयान्तु प्रीत्या सकृत् सर्वमर्त्याः।
रथ्यारूढा लभन्तां दिष्ट्या परं कल्पलोकं
सन्तो यत्र प्रसन्नाश्चौरो न कस्यापि भर्ता ॥६४॥

( पादचारं करोति )

किमभवत् शिलापत्तने नैशयानोद्बोधनस्य ? अपि प्रतीपं गच्छन्ति श्रमिकजनाः ?

( ततः प्रविशति चक्रधारी )

चक्रधारी—क्षन्तव्य आर्येण मत्प्रवेशः। चिन्तामग्नस्य भवतो विघ्नः साधितो मया।

आदिशूरः—न हि—न हि। परन्तु उद्विग्नोऽहम् उत्तरवङ्गसंस्था-सन्देशाय। किं वदन्ति कर्मिसंघनेतारः ? बाधन्ते ते उत्सवनिरतान् ?

चक्रधारी—प्रथमं विज्ञापितानि मया भवत्प्रतिश्रुतानि सांकर्याणि। तत् श्रुत्वा ते परमं सन्तोषमगच्छन्। उक्तवन्तश्च—न पूर्वं केनापि सर्वाध्यक्षेण एतानि दत्तानि तेभ्य इति। सत्वरं ते अत्रागच्छन्ति निवेदयन्ति च भवत्समीपे तेषां तुष्टिं प्रतिश्रुतिञ्च। भुक्तिपतेर्विकल्पश्च दूरीभूतः। स हि उद्बोधनोत्सवे स्थास्यति। एतेन भवतो विजयः सूच्यते। प्रीताश्च वयं सर्वे कलिकातास्थाः कर्मचारिणः।

आदिशूरः—सुष्ठु आचरितं कर्मिभिः। यद्धि मया क्रियते तत् सर्वमेव कर्मिणां हिताय संस्थाया उन्नतये च कल्पते। नास्ति मे भिन्नार्था अभिरुचिः।

नैशक्रान्तौ नन्दतु स्वप्रयानं
सुस्निग्धान्ताश्चाध्वगा यान्तु तृप्तिम्।
प्रीत्या सर्वे कुर्वते स्वस्तिगानं
धन्या संस्था नो भवेत् प्राप्य कीर्तिम् ॥६५॥

आगच्छ मया सह। उद्बोधनकाले मद्रचितं संस्थागीतं गास्यन्ति कर्मिणः। प्राथमिकं प्रयासं करिष्यन्ति ते कक्षान्तरे। शृणुवः कीदृशं नैपुण्यं लब्धं तैरिति।
(निष्क्रान्तौ)

—इति तृतीयोऽङ्कः—

## चतुर्थोऽङ्कः

### —प्रवेशकः—

( इन्द्रनीलः रत्नाकरश्च )

इन्द्रनीलः—भो रत्नाकर ! चित्रभानुर्निहतः श्रमिकान्दोलने। तस्य तरुणी पत्नी शिशुपुत्रश्च महाकष्टमापन्नौ। मुख्यपरिचालकात् प्रार्थयिष्ये साहाय्यम्।

रत्नाकरः—सकृत् साहाय्यं दीयते यदि तदा तेन चित्रभानुपरिवारस्य अभावो न दूरीभविष्यति। तस्य भार्या पदमेकं लमेत चेत् तदैव यथायोग्यं स्यात्।

इन्द्रनीलः—अस्मदीयसंस्थायां नवकर्मिसंग्रहो न क्रियतेऽधुना। वहूनि शकटानि जातान्यचलानि, अतः कर्मिवाहुल्यमस्ति। न जाने किं भविष्यति भाग्ये चित्रभानुपरिजनानाम्।

विधिर्यस्य वैरी सदा दुःखभाजो
विशाला धरित्री कृते तस्य रिक्ता।
सखायो भवन्ति प्रतीपा विविक्ताः
शरण्यो यदि स्याद् यमो धर्मराजः ॥६६॥

रत्नाकरः—कथमीदृशं भणसि इन्द्रनील ? चित्रभानोर्वन्धवः परमं स्निह्यन्ति स्म तस्मिन्। परलोकगतस्यापि तस्य सर्वे वयं स्मरामः तत्परिवारस्य कृते च यथासाध्यं प्रचेष्टामहे। सर्वाध्यक्षसमीपं गच्छामः। तत्रभवान् किमपि युक्तं करिष्यत्येव।

इन्द्रनीलः—कतिपयाः श्रमिकास्तस्य हृदयं भृशं व्यथयन्ति। उन्मत्तप्रायं नियामकं कञ्चन स दयते स्म परन्तु अर्वाचीनेन असद्व्यवहारः कृतः।

रत्नाकरः—जानाम्यहं तद्वृत्तान्तम्। छद्मना स दुराचारो यथेच्छं कर्त्तुमिच्छति। सर्वान् आधिकारिकान् तथा कर्मिणः स दुर्नीतिपरायणान् मन्यते। परन्तु स स्वयमेव दुष्कृतिदक्षः। योग्या शास्तिर्दातव्या तस्मै।

इन्द्रनीलः—दुर्वृत्तः स उन्मादग्रस्तश्च—

चौरं स पश्यति सर्वगृहेषु मानी
शत्रुं विगण्य्य हिनस्ति मनुष्यमात्रम्।

आत्मानमार्यवरं च स वेद पात्रं
मत्तस्य तानि भवन्ति हि लक्षणानि ॥६७॥

रत्नाकरः—चित्रभानुस्तु सज्जन आसीत्। केचिद् वदन्ति स दुर्घटनहतो बभूव न तु प्राणत्यागं चकार कस्मिंश्चिदपि महाकर्मणि।

इन्द्रनीलः—न विचारयामस्तस्य कार्यम्। अकालमृत्युमापन्नः स सर्वैः शोच्य एव। तथा हि—

प्रशंसार्हस्तथा निन्द्यो
यावन्नरो धरातले।
गतस्य परलोकं तु
दोषान्वेषो ह्यसाम्प्रतम् ॥६८॥

सत्कर्मव्यापृत एव चित्रभानुर्मृत्युं वव्रे इति मे दृढ़प्रत्ययः। नित्यं दास्यति ज्योतिरिहलोकस्थेभ्यः सहकर्मिभ्यः।

रत्नाकरः—चित्रभानुतनयो दिष्ट्या वर्धते मनुष्यत्वलाभाय जननीदुःख-निरसनाय च इत्यहं प्रार्थये।

इन्द्रनीलः—अपि जानासि, रत्नाकर, तारातलाशकटागारस्य अमृतस्य पुत्रः सर्वपरीक्षासु उत्कृष्टफलं दर्शयतीति ?

रत्नाकरः—अथ किम्। सर्वाध्यक्षोऽपि जानाति अमृतपुत्रस्य वृत्तान्तम्। भृशम् उत्साहयते सोऽमृतम्। कथं न कर्मिसन्ताना ज्योतिष्कसमाना भवन्ति ?

सकलासु दिक्षु विकसन्ति तारकाः
कुसुमानि भान्ति गहने वनान्तरे।
मणयः सदैव विलसन्ति भूतले
प्रतिभा च दीनसदनेऽपि जायते ॥६९॥

इन्द्रनीलः—अस्माकं सर्वाध्यक्षश्च वित्तहीने परिवारे जातः। आत्मचेष्टया तत्रभवान् ईदृशीम् अवस्थां लब्धवान्। उक्तमेकदा तेनैव—

भाग्यं न लिखितं हस्तरेखासु कदापि धात्रा
किंवा न गगने तारकाभिश्च भवेन्निर्दिष्टम्।

सत्यं खलु नरो वर्तते स्वीयविधातृकल्पः
शूरैश्च नियतं सृष्टमेवात्मकरैरदृष्टम् ॥७०॥

महद्वाक्यमेतद् युज्यते कर्मवीरस्यैव। कर्मणो ह्यार्दिकः प्रयासः यद्यपि न सर्वत्र साफल्यं गतः।

रत्नाकरः—सत्युमुक्तं त्वया—

ईहते फलं चिराय कर्मणो हि कर्मवीरो
मन्यते सदैव नात्र लभ्यते गतिर्गरिष्ठा।
यद्यपि श्रमं करोति धान्यरोपणाय धीरः
कर्षको विवेत्ति शस्यकर्तनं भवेत्तु दिष्ट्या ॥७१॥

कर्मिणश्च वयं श्रमप्रयासैरेव जीवितुं कामयामहे। उद्दीपना भवति कर्मफलप्रसूः।

इन्द्रनीलः—न जाने किमस्माकं सर्वाध्यक्षः साफल्यमधियास्यति न वा तथापि तस्य प्रयासं प्रशंसामि।

रत्नाकरः—वन्यापीडितानाम् अस्मत्सहकर्मिणां दुःखलाघवाय स परित्राण-सचिवाद् निर्बन्धातिशय्येन साहाय्यमयाचत परन्तु न प्राप्तः ईषदपि साहायकम्। तद्बन्धुः स्वास्थ्यसचिवस्तु यदा यदा हि अनुरुद्धस्तदा तदा हि कर्मिभोजनालयानां खाद्याभावं दूरीकृतवान्। न तु सर्वे सचिवाः नितरां प्रयतन्ते दुःखनिरसनाय।

इन्द्रनीलः—एकदा कर्मविरतिकाले कार्यरतश्चालकः कश्चन लोष्ट्रनिक्षेपाद् दक्षिणचक्षुषि आहतः। अस्माकं मुख्यश्रमाधिकारिकादयः प्रभूतेन यत्नेन तं चिकित्सासदने स्थापितवन्तः। सर्वाध्यक्षानुरोधात् चिकित्सकाः परमसेवया तं निरामयत्वम् अनयन्।

रत्नाकरः—अस्माकं स्वकीयश्चिकित्सालयो विद्यते चेत् परमोपकाराय सम्भवति। राष्ट्रियभविष्यनिर्वर्त्तनी संस्था तु विषयेऽस्मिन् नातिचिकीर्षुः।

इन्द्रनीलः—प्राक्तनेन हितदेयेन यदि चिकित्सालयो निर्मीयते तर्हि वयम् अनुद्विग्नास्तिष्ठेम। सर्वाध्यक्षस्य प्रकल्पो नाद्यापि वास्तवीकृतः।

रत्नाकरः—दुःखकरमिदम्। राष्ट्ररथस्य चक्राणि न चलन्ति तरसा।

इन्द्रनीलः—( सस्मितम् ) राष्ट्रियरथास्तु न मृदुगतयः।

रत्नाकरः—अथ किम्। अहं शासनयन्त्रम् उद्दिश्य वक्तुकामः।

सेवन्ते नाद्य वज्रान् सुनिपुणकरणा राष्ट्रपुरुषा
अभ्यासात् केवलं तै रजनिदिवसयोः कर्म विहितम्।
तूर्णं नः साधयन्ते न विपदुपशमं चित्तपुरुषा
मन्ये राज्यं दयार्द्रैर्विगलितहृदयैर्हन्त रहितम् ॥७२॥

इन्द्रनीलः—बन्धुर्मे प्रदीपः सान्निपातिकज्वरेण शय्यागतः। यास्यामि तस्योटजम् अधुना। मम पुत्रश्च क्षयरोगेण पीड़ितः। ममादर्शनेन क्रन्दति भृशम्।

रत्नाकरः—तदहमेव प्रदीपनिलयं गमिष्यामि। याहि त्वं द्रुतं स्वभवनम्—

दीनस्य सख्या धनिना न भूयते
लभ्यं ततो नैव कदापि सान्त्वनम्।
नित्यं हृदन्तर्यदि रौति यन्त्रणं
बन्धोर्हि वाक्यं प्रशमाय कल्पते ॥७३॥

इन्द्रनीलः—अनाथास्तु पितृसहकर्मिभिरेव पालनीयाः।

रत्नाकरः— स्वर्गपुरस्थो दीननृणां
पालक आसीन्नः किल यः।
बुद्बुदवत् स प्राप्तलयः
कोऽद्य नु रक्षेत् श्रीरहितान् ॥७४॥

इन्द्रनीलः—नैवंविधं भाषणं साम्प्रतम्। कल्पनाविलासेन कोऽतिक्रामति नु दुर्दैवम्?

अलसपुरुषकल्पनाकृतं
भवति सुरायतनं सुखार्थिनः।
श्रमिकशरणसद्म निश्चितं
जनगणसंघ इहामरा हि नः ॥७५॥ ( निष्क्रान्तौ )

—इति प्रवेशकः—

( ततः प्रविशति चालकः परिमलः )

परिमलः—( सक्रोधम् ) श्यालक कुशल ! ऋणरूपेण गृहीतानि त्वया पञ्चाशद् रूप्यकाणि । शून्यहस्तोऽहमद्य, चत्वारिंशद्रूप्यकैश्च महत् प्रयोजनं सञ्जातम् । कुत्र प्राप्यन्ते मया तान्यञ्जसा ? गर्हितमेव तवाचरणम् । किं करोमि ? क्व गच्छामि ? ( नेपथ्यं दृष्ट्वा ) भो अरिन्दम ! अरिन्दम ! अत्रागच्छ सत्वरम् ।

( नेपथ्ये ) अरिन्दमः—क्षमस्व मां परिमल ! पत्नी मे पीडिता परमदुर्वचना च सा । अविलम्बितेन मया गृहं गन्तव्यम् । मोदालापस्य नैष कालः ।

परिमलः—श्या...भ्रातः ! नास्ति मे रहःकथनेन प्रयोजनम् । परन्तु महाविपदि निपतितोऽहम् । उद्धर मां बन्धुजनम् ।

( नेपथ्ये ) अरिन्दमः—प्रत्यहं त्वं विपदापन्न एव । कालक्षेपं कर्तुं न शक्नोमि ।

परिमलः—एवं यदाचरसि तत्तव परिणयकथां सर्वेभ्यो विज्ञापयामि । बान्धवावज्ञायाः फलं लभ्यते त्वया मूढमतिना ।

छद्मवेषं यः परिधाय नित्यं
भ्राम्यति स्तेनो दिवसेऽतिभद्रः ।
सान्द्रतामस्यां स तु वीततन्द्रो
लिप्सते रात्र्यां परकीयवित्तम् ॥७७॥

( प्रविश्य ) अरिन्दमः—( सक्रोधम् ) कथं मिथ्या भाषसे ? नाहं ग्रन्थिच्छेदकः गृहतस्करो वा ।

परिमलः—( सहास्यम् ) कथं त्वया ममानुरोधो न पालितः ? अधुना त्वमागत एव मत्समीपम् ।

अरिन्दमः—न बिभेमि कस्मादपि । परन्तु त्वं क्रन्दसीव । अतोऽहं त्वद्दुःख-कथिकां श्रोतुमायातः । वद झटिति यत्ते वाच्यम् ।

परिमलः—धर्मपत्नी मे शय्याशायिनी ।

अरिन्दमः—धर्माधर्मयोः कथां मा ब्रूहि। परन्तु सा विलासप्रिया प्रायशः शय्यामधिशेते गृहकर्मवर्जनाय।

परिमलः—नैतद् वक्तव्यम्। सत्यं सा व्याधिग्रस्ता मन्दभाग्या।

अरिन्दमः—तवाङ्कशायिन्याश्छद्मव्याधिर्नैगर्य्यमधुना सुविदितः। विषयान्तरं कथय।

परिमलः—जहीहि कठोरवचांसि। तथ्यतः सा रुग्णा दुरारोग्यव्याधिना।

अरिन्दमः—आसीदेकदा कश्चित् मेषपालको यो व्याघ्र आयात इति...

परिमलः—करुणाहीनस्त्वम्। सत्यं हि व्याधिशार्दूलः पत्नीं मे खादितुमुद्यतः।

अरिन्दमः—मादृशो जनः किं करिष्यति? नाहं वैद्यो धन्वन्तरिर्विधानचन्द्रो वा!

परिमलः—शतं रूप्यकाणि देहि मे...

अरिन्दमः—अहं स्वयमेव रोगार्तः। न स्वचिकित्साहेतवे अर्थव्ययं कर्त्तुं क्षमः, का कथा परस्य। कथमहं तव सहायो भवामि?

परिमलः—दरिद्रस्य बन्धुर्दरिद्र एव।

अरिन्दमः—परस्परसाहाय्यभाण्डाराद् ऋणं कुरु।

परिमलः—न प्राक्तनधारस्यार्थो मया अद्यापि प्रत्यर्पितः।

अरिन्दमः—अहं चाक्षमः। क्षमस्व माम्। विलम्बकारिणं मां मुखरा भार्या तिरस्करोति। हा मे मन्दभाग्यम्!

मम निलये वसतिं करोति या
विषवदना सरुषा सदैव सा।
सखिकथिताः खलु सन्ति मानवा
न तु विदिता यदि केऽपि बान्धवाः॥७७क॥

जीवनात् मरणं श्रेय इति मे प्रतिपद्यते। ( निष्क्रान्तः )

परिमलः—कष्टं भोः ! को दयते ममाद्य ? एकमेव रूप्यकमस्ति गात्रावरणगह्वरे । तद् गच्छामि शौण्डिकालयं दुःखविस्मरणाय—

तवास्ति मधुरे माध्वि वसतिः शौण्डिकालये ।
दीनस्य शरणं साध्वि त्वामहमभिनन्दये ॥७८॥

( अट्टहास्यं कृत्वा नृत्यति गायति च )

गुञ्जामि साकं भ्रमरैः संश्रित्य निकुञ्जं
वाञ्छामि पातुं सह तैः पुष्पासवपुञ्जं
कस्तु जाल्मको भीषयते मां छद्मसु चतुरम् ।
मुञ्चामि शीते मसृणं चीनांशुकवासो
मञ्जुर्मयाप्तो मलयो वासन्त-सुवासो
हर्षदूतकः प्रेमसखो गास्यामि च मधुरम् ।
सान्त्वयामि सङ्गीतरवैः कान्ताच्छलविधुरम् ॥७९॥

( ततः प्रविशति चन्द्रापीडः )

चन्द्रापीडः—न खलु न खलु विरम्यतां मार्गसङ्गीतं सखे ! अयं च मन्दधीरहं सङ्गीतप्रियः । मम कण्ठे नास्ति सुस्वरः परन्तु हृदयं गीतिरसमाधुरीपूर्णमेवं । ( गायति )—

मदिरसङ्गीतं खलु यदि
रसिकसेव्यं वा निरवधि
तद् गाय त्वं गाय त्वं न तु विरम सज्जन स्वतः ।
प्रचुरमेव त्वं निरुपम
कलरसं यच्छेर्ननु मम
यत् तृप्तिं गमिष्यामि रहिततृषः क्लान्तिसंयतः ।
स्तौमि प्रेममन्त्रं रुचिलययुतं मूर्छनं गतः ॥८०॥

परिमलः—( विहस्य ) साधु साधु चन्द्रापीड ! त्वमपि सङ्गीतसाधको मादृशः । सङ्गीतेन तुल्यं किमपि द्रव्यं न पश्यामि मरीचिकाप्रवञ्चिते दरिद्रजीवने—

न बन्धुर्न मित्रं न पुत्रः कलत्रं
करोति प्रतप्तं मनः स्नेहलिप्तम् ।
सुरोद्यानकल्पं मरोरुष्णभूमौ
सदा चित्तरम्यं नराणां सुगीतम् ॥८१॥

अरिन्दमः—तत् श्रावय सखे, द्वितीयं सङ्गीतं मनोज्ञम् ।

परिमलः—( गायति )—

प्रवह प्रवह स्वैरं शीतस्य हि वात !
न तथा करुणाहीनस्त्वं शैत्यसनाथः
यथा भवति कृतघ्नः कथञ्चिन्मानवः ।
न भृशं निशितास्तावद् हिंस्रा दशनास्ते
तरलं खलु रूपं ते गुप्तं चिरमास्ते
सदापि सति कराले विनिःश्वासे तव ।
हंहो गाय त्वं हंहो कुञ्जं प्राप्य सर्वथा
बन्धुत्वं प्रायो जिह्मं कान्ताप्रेम मूर्खता ।
तद् हंहो त्वं गाय च कुरु नृत्तम् ।
हर्षात् फुल्लं हि नो जीवितमतिदीप्तम् ॥८२॥

चन्द्रापीडः—दुःखं विस्मर सखे ! अदृष्टविडम्बिता वयम् ।

स्वागता भवति नात्र तु लक्ष्मी-
र्नन्दनः खलु जनोऽयमलक्ष्म्याः ।
संभजे कुनियतिं सततं मे
जल्पितैर्हि परिहासविमिश्रैः ॥८३॥

शृणु सङ्गीतांशम्—( गायति )

मधुरं सद्यः स्वपिति कौमुदी स्निग्धकानने
नभः-कुट्टिमे भान्ति रत्नखण्डाः पुष्कलाः ।
नियतं गायन्ति ननु वर्त्मगाः सुस्मितानने
ग्रहाणां समूहाश्च हर्षमन्थैश्चञ्चलाः ॥८४॥

[ ततः प्रविशति इन्द्रनीलः ]

इन्द्रनीलः—किं क्रियते युवाभ्यामत्र ? नेदं स्थानं नृत्यसंगीतयोः।

चन्द्रापीड़ः—चन्द्राहतः अधमोऽयं जनः।

इन्द्रनीलः—कथं चन्द्राहतिर्दिवाभागे सम्भवति ?

चन्द्रापीड़ः—

सूर्यांशुर्न प्रविशति यदि ग्रीष्मकालेऽपि गेहे
चन्द्रो दत्ते न किरणकृपां पौर्णमास्यां रजन्याम्।
बान्धवाः स्युर्विरसवदनास्तस्य नित्यं समीपे
मत्तप्रायो भवति नियतं मद्विधो मन्दभाग्यः ॥८५॥

परिमलः—अहं च भाग्यहतो दरिद्रजनः ! विप्रदिग्धा सञ्जाता दैनन्दिनी जीवनयात्रा। अतो मधुपानकल्पनया दुःखं विताड़यामि।

यस्याः सेवनचिन्तैव सान्त्वयति तृषान्वितान्।
वाञ्छाकल्पलतां वन्दे सुरां सदा सुरार्चिताम् ॥८६॥

इन्द्रनीलः—दुःखेऽपि हसितुं प्रवृत्तोऽहम्। सुरां पीत्वा को याति विषादहीनताम् ? नास्ति मदिरासमो वैरी मनुष्याणाम्।

वित्तं विनश्यति यस्य जरितं शरीरं
सम्भाषितः सखिभिर्न तनयैर्विसृष्टः।
भार्या जहाति यमेव घृणया रिपुश्च
धिक् तं मृतानुकृतिं हि मनुजं सुरापम् ॥८७॥

चन्द्रापीड़ः—निर्घृणं वचनं ते, इन्द्रनील ! क्षणिकसुखं ददाति नो मदिरेव वञ्चितेभ्यः। कीदृशं मार्गान्तरं सूचयिष्यसि त्वं तल्लाभाय ?

प्रवर्तते स्वजनसुखाय बान्धवो
हितव्रतो भवति सदा नृणां सखा।
स किं सखा न तु यतते हिताय यो
न बान्धवो यदि न सुखं समीहते ॥८८॥

इन्द्रनीलः—नेदमुचितं वचः। नूनमहं तव बान्धवः सखा च हिताकाङ्क्षी। परन्तु न जानासि त्वमात्मनः शुभम्। श्रमिकाणां जीवनं दुःखपूर्णम्। अभावस्तेषां नित्यसङ्गी विषादश्च सहोदर एव। अतः सुरापानेन दुःख-वर्धनम् असाम्प्रतम्। प्रतिजानीहि—अत्र कदापि न सुरासक्तो भवसीति। परिमल, त्वां प्रति च सदृशं मम वक्तव्यम्।

वित्तेशानां हि युक्तो व्यसनमदरसः संरमन्तां भृशं ते
चित्तामोदः परन्तु श्रमनिरतनृणां संयमे नित्यवासः।
निर्वाणं दीपवर्तेः प्रहरपरिमिते कालमात्रे व्यतीते
कुत्र स्याच्चित्रभानोः शतयुगसमये वर्चसां स्वल्पनाशः॥८९॥

परिमलः—अद्य प्रभृति न कामये सुरां कदापि।

चन्द्रापीडः—नाहं कदापि मदिरासक्तिं गच्छामि। परन्तु कथं नो दुःखनाशो भविष्यति ?

इन्द्रनीलः—अस्ति प्रशस्तः पन्थाः।

बुद्धिः संघे तिष्ठति शक्तिश्च विशाला
संघे जातो निश्चितमेव प्रियभावः।
सायुज्यं यः कामयते संघसदस्यैः
क्षेमं लभ्यं तेन सदैवात्मसुखार्थम्॥९०॥

सर्वेः—संघं शरणं गच्छामि।

( निष्क्रान्ताः सर्वे )

—इति चतुर्थोऽङ्कः—

## पञ्चमोऽङ्कः

—प्रवेशकः—

[ ततः प्रविशति चालनाधिकारिको निर्माल्यः ]

निर्माल्यः—नगररक्षकाः कतिपया न सुष्ठु आचरन्ति। कुत्र कुत्रापि परिवहणकर्मिणस्तैर्भर्त्सिता आहताश्च। किं तेषां क्रोधस्य कारणम्? विना पाथेयं ते शकटेषु भ्रमितुमिच्छन्ति। कामम् आरक्षकवेषं ये परिदधति पाथेयं ते न ददति कदाचन, तथापि नास्ति तेषां सन्तोषः। इदानीं साधारणवस्त्रा गुप्तारक्षकाश्च ईदृशं कर्तुं चेष्टन्ते। विधिरक्षायै येषां विशेषेण नियोगस्तैरेव विधिलङ्घनं क्रियते। परिवहणकर्मिणः पाथेयं प्रार्थयमाना लाञ्छनां प्राप्ताः।

श्रयते यदि रक्षणकर्ता
भक्षकवृत्तिमपि स्वपदे।
क्रियते खलु केन तु राष्ट्रे
शिष्टजनस्य रिपोर्दमनम् ॥६१॥

( पादचारं करोति )

[ ततः प्रविशति शङ्खघोषः ]

शङ्खघोषः—नमस्ते भाव! चालकानां नियामकानां च महत् कष्टमापतितम्। एकतः केचन पथिका अपि चालनकर्मिणः प्रति दुर्व्यवहारं कुर्वन्ति, अन्यतोऽधुना आरक्षकाश्च रूढायन्ते कारणं विनापि। तत् किं कर्तव्यम् अस्मदीयम्?

निर्माल्यः—सर्वाध्यक्षं विज्ञापयामि सत्वरम्।

[ ततः प्रविशन्ति अमिताभ इन्द्रनीलो रत्नाकरश्च ]

अमिताभः—नेदं सोढुं शक्नुमः। आरक्षका जाता अत्याचारिणो भूयिष्ठम्। निर्दोषान् श्रमिकानपि पीडयन्ति ते नगर्याः पथिषु।

इन्द्रनीलः—अनियम एव नियमीकृतस्तैरिदानीम् ।

रत्नाकरः—राष्ट्रपतिशासनस्य विषमयं फलम् ।

निर्माल्यः—न राष्ट्रपतिना न वा राज्यपालेन नियोजितास्ते अन्यायकर्मणि । तथापि वदामि गर्हितं तेषां कर्मेति । मुख्यपरिचालको विषयेऽस्मिन् आरक्षाधिकारिकाणां दृष्टिमाकर्षयत् न तु फलं लब्धमस्माभिः । शोचनीयम् एतादृशम् आचरणं आरक्षककर्मिणां ये न शृण्वन्ति स्वकीयानां प्रभूणामपि वचनम्—

विलसति यदि मन्दो राष्ट्रभृत्यः कुकार्ये
सपदि विधिनियन्त्रा नीयतां स स्वमार्गम् ।
जनगणमनसि क्व स्थाप्यते न्यायबुद्धिः
स्वयमपि यदि रक्षी सञ्चरेत् निन्दितार्थम् ॥६२॥

रत्नाकरः—न वयं बलहीनाः । विधिगतेन उपायेनैव विज्ञापयामः । वक्तव्यमस्माकम्—

शोभायात्रा सुनायकचालिता घटितागण्यकर्मिभिः
मार्गे मार्गे प्रधावति छन्दसा कलिकातापुरान्तरे ।
कण्ठारावस्तनोति मेदिनीं मुखरः स्यात्तथाम्बरे
वार्तां श्रुत्वा प्रतिश्रुतिर्दिशि क्रियते नो हितार्थिभिः ॥६३॥

निर्माल्यः—( साश्चर्यम् ) न भणितं पूर्वं युवाभ्यामेतत् । कुत्र विराजते सा शोभायात्राधुना ?

इन्द्रनीलः—सर्वशकटागारेभ्यस्तथा केन्द्रीययन्त्रालयाच्च आगताः कर्मिणः निर्मलोद्यानमभि प्रक्रमन्ते । आवां द्वौ यास्यावस्तत्राधुना ।

( निष्क्रान्तौ )

निर्माल्यः—गच्छामि सर्वाध्यक्षसमीपम् । सर्वं विज्ञापनीयं सत्वरमेव ।

( प्रस्थितः )

—इति प्रवेशकः—

( ततः प्रविशति सर्वाध्यक्षः स्वकक्षस्थः )

आदिशूरः—तुमुलकोलाहलरव आयाति पूर्वदिशः। अतः कर्मिणां शोभायात्रा निर्मलोद्यानम् उपनीता भवेत्।

[ ततः प्रविशति मुख्यपरिचालकश्चालनाधिकारिकश्च ]

उपविशत। अद्य खलु दुरूहा परीक्षा मम।

विश्वनाथः—जेष्यति भवान् निःसंशयम्।

निर्माल्यः—यतो धर्मस्ततो जयः!

आदिशूरः—( सस्मितम् ) धर्मस्य तत्त्वं निहितं गुहायाम्, तद्द्वारकुञ्चिका च मया न लब्धा। भवतु—

श्रयामि धर्मं निजनियोगसाधनं
स्वकर्मिरक्षा प्रियतमं हि वन्दनम्।
क्व वक्रपन्था विचचितः सदात्मना
न दुर्विपाकः श्लथयते द्रुताटनम् ॥६४॥

विश्वनाथः—सर्वे सहकर्मिणो भवतः पार्श्वचरा एव।

आदिशूरः—जानाम्यहं तत्। परन्तु भूयिष्ठम् उत्तेजिताः कर्मिणः। यदि ते राजभवनं यास्यन्ति विपन्निरसनाय तेन मम पराजय एव सूच्येत।

निर्माल्यः—कथं तादृशम् अनुमानं स्यात्। शोभायात्राशोभिता कलिकाता-नगरी नित्यं यत्र जनतायाः पदयात्रा सम्पद्यते। इदानीं योग्यकारणं च घटितम्।

आदिशूरः—राज्यपालो विचारयति कर्मिणां विपदि निरासक्तोऽहमिति। न कामये सिद्धान्तं तादृशम्—

श्रद्धापात्रं यो भवति कृती दुःस्थार्तानां
शान्तोद्वेगस्तिष्ठति स कथं दुःखं दृष्ट्वा।
हस्तक्षेपो यत्र हि विहितः कुर्यात्तं द्राङ्
मन्येऽध्यक्षो यास्यति समतां त्रातुर्दिष्ट्या ॥६५॥

[ ततः प्रविशति अमिताभ इन्द्रनीलो रत्नाकरश्च ]

अमिताभः—निर्मलोद्यानात् सर्वे कर्मिणः समागता अत्र। तिष्ठन्ति ते सुश्रृङ्खलाबद्धा गणेशवर्त्मनि केन्द्रीयकर्मालयस्य पुरतः। अपि सर्वाध्यक्षो यास्यति तत्र ?

सर्वाध्यक्षः—न गमनेन प्रयोजनम्। ( दूरभाषणयन्त्रं गृहीत्वा ) स्वराष्ट्रसचिवेन सह आलोचनां करोमि। ( यन्त्रेण कथयति ) हंहो ! आर्य नीलकान्त ! सपरिवहणसचिवस्त्वया सह मन्त्रयिष्ये। निर्मक्षिकमस्ति ? यास्यामि झटिति। ( यन्त्रं जहाति ) गच्छामि करणिकभवनम्। सत्वरमेव प्रत्यावर्तनं करोमि। भवन्तस्तिष्ठन्तु अत्रैव।

( निष्क्रान्तो द्रुतपादक्षेपेण )

विश्वनाथः—व्यवस्थाविशेषं करिष्यति सर्वाध्यक्षः।

[ नीचैः कोलाहलं श्रूयते ]

निर्माल्यः—सर्वाध्यक्षं दृष्ट्वा कर्मिणः किञ्चिद् वदन्तीव।

[ ततः प्रविशति मुख्यश्रमाधिकारिकः ]

श्यामाङ्गः—सर्वाध्यक्षेण करणिकभवनाभिमुखं गतम्।

विश्वनाथः—किं स कर्मिणः किमपि उक्तवान् ?

श्यामाङ्गः—अथ किम् ! तेनोक्तं—राजभवनं गच्छथ चेन्मम पराजयः सूच्येत अतः अत्रैव तिष्ठतेति। ततः सर्वैरुच्चारितं विजयतां नः सर्वाध्यक्ष इति।

अमिताभः—अद्यापि जयति स एवात्र। परन्तु सुव्यवस्थायां न विहितायां सर्वे भृशम् उद्वेजिताः सन्तो राजभवनं गमिष्यन्त्येव।

श्यामाङ्गः—तत्र भवता भणितमेकदा—

आ बाल्यतो नाद्याप्ययं दूष्यं श्लिष्टवान् जनो
विद्यालये छात्रोऽथवा शिक्षाकर्मसंश्रितः।
राष्ट्रायत्ते दिल्लीपुरे किंवा वङ्गभुवि स्थः
शङ्के लप्स्ये निन्दावचः संस्थायां किमत्र नः ॥६६॥

निर्माल्यः—न निन्दन्ति केचनापि तम् ।

विश्वनाथः—शकटानां नामकरणस्य हेतोर्बहवो निन्दन्ति परन्तु प्रशंसन्ति च ।

अमिताभः—किमत्र चित्रम् ?

अरसिकेषु निष्फलं रसस्य निवेदनं
यदि समर्प्यते क्वचित् तदेव सदास्मभिः ।
ददति हन्त तादृशाः प्रभूतविडम्बनं
सुरसिकाद्धि केवलं लभेत मुदं कविः ॥ ७॥

रत्नाकरः—सर्वाध्यक्षो वङ्गभाषया तथा संस्कृतेन च काव्यानि रचितवान् । तेन च विरचितानि तिसृणां परिवहणसंस्थानां सङ्गीतानि । अतः शकट-नामकरणविषये नास्ति किमपि वैचित्र्यम् ।

इन्द्रनीलः—कदा प्रभृति रत्नाकरः काव्यरसप्रेमिको जातः ?

रत्नाकरः—किं न जानासि, रत्नाकर एव वाल्मीकिमुनिर्यो रामायणमादिकाव्यं किल रचयामास ?

इन्द्रनीलः—( सस्मितम् ) तदिदानीं त्वं दस्युरेव ।

रत्नाकरः—दास्यवृत्तिरहं कथं दस्युपदवीं लभेयम् ?

न वसति कुत्रचिद् विप्रो धर्मात्मजः
क्व च निजरक्षया क्षत्राख्या प्राप्यते ।
य इह नृपुङ्गवो जन्मैधो मृगयते
स भवति कर्मणा वैश्यः किंवाऽन्त्यजः ॥६८॥

श्यामाङ्गः—रत्नाकरदासो वीर एव ।

रत्नाकरः—कथं मामुपहसति भवान् ?

श्यामाङ्गः—परिहासभणितमीदृशं न तु उपहासात्मकम् । अपि च क्रीडा-नैपुण्येन रत्नाकरः शूराख्यां लब्धुं क्षमः ।

रत्नाकरः—( सलज्जम् ) नाहं क्रीडाकुशलः, यद्यपि क्रीडारतोऽस्मि सर्वदा । इन्द्रनीलो विषयेऽस्मिन् मत्तो गरीयान् ।

इन्द्रनीलः—बहिःक्रीडा न रोचते मह्यम्। शतरञ्जादिषु अस्ति मे ज्ञानं न तु विशेषज्ञता।

रत्नाकरः—( विहस्य )—

भवति चरणकन्दुकाख्यं क्रीडनं मनोज्ञं
रमयति हकि-नामधेयं यष्टिगोलकं यत्।
अलसपुरुषरंजनं स्यात् खेलनं गृहान्तः
श्रमरमणं जनस्य सेव्यं कुत्र वा भवेत्तत् ॥९९॥

इन्द्रनीलः—( सस्मितम् ) पराजितोऽहं रत्नाकरेण। तथापि न विषादं गतः।

वाञ्छन्ति मनुष्याः संख्येषु जयं वै
कुत्रापि तदन्यं वा पात्रविशेषात्।
सर्वत्र सुखाय प्रायो विजयः स्यात्
पुत्रात् किमु शिष्यान्नैवं लषितस्तैः ॥१००॥

स तु मम मन्त्रशिष्य एव।

रत्नाकरः—नाहं कस्यापि मन्त्रशिष्यः।

एको मे जपमन्त्रश्चित्तोन्मादनशक्तः
क्षेमः संघसुलभो दीनानामयकृद्धि।
वाक्यैः कायमनोभ्याम् आ प्रातः खलु नक्तं
कार्या मन्त्रनिषेवा दिष्ट्या स्यादपि सिद्धिः ॥१०१॥

विश्वनाथः—साधु साधु! मन्त्रं वा साधयेयं शरीरं वा पातयेयमित्येव रत्नाकरस्य संकल्पः। परन्तु भूयिष्ठं चिन्तान्वितोऽहं कथं नायाति करणिकभवनात् सर्वाध्यक्षः।

[ नेपथ्ये तुमुलः कलरवः ]

निर्माल्यः—सर्वाध्यक्षः प्रत्यावृत्त इति मन्ये।

[ ततः प्रविशति सर्वाध्यक्षः ]

आदिशूरः—अस्माकमालोचना फलप्रसूरेव जाता।

[ सर्वे हर्षध्वनिं कुर्वन्ति ]

तथ्यनिर्णायकः कश्चिद् नियोज्यते। स खलु निर्धारिततथ्यसमन्वितं विवरणं दास्यति सत्वरम्। तन्निर्धारिता दोषिणः शास्ति प्राप्नुवन्ति। एक-मासान्ते अनुमतिपत्राणि दातव्यानि अस्माभिरारक्षकेभ्यो विना शुल्कं शकटभ्रमणाय। स्वराष्ट्रारक्षकविभागश्च अनुदानं करिष्यति परिवहण-संस्थायै।

विश्वनाथः—तदस्माभिर्जय एव लब्धः। अस्मत्कर्मिणो निर्दोषाः, ततः शास्ति-र्न लभ्यते केनचिदपि। विना शुल्कं भ्रमणं च तिरोहितं क्षतिपूरण-विधानहेतोः।

अमिताभः—क्षतिपूरणं पर्याप्तं विधातव्यम्।

आदिशूरः—अथ किम्। आगच्छत, यास्यामो गणेशवर्त्म।

—पटपरिवर्तनम्—

[ अगणिताः कर्मिणः संस्थाधिकारिकाश्च ]

आदिशूरः—भो बन्धवः! सफलं मे दौत्यम्। न जायेत कलहकारणम् अद्य प्रभृति। तथ्यनिर्धारकः शीघ्रं नियोज्यते। विवरणानुयायिनी व्यवस्था क्रियते दोषिणां विचाराय। अनुमतिपत्रप्रथा शुल्कहीनभ्रमणाय विधीयते, क्षतिपूरणं च संस्थायाः करिष्यति स्वराष्ट्रविभागः। अतो मत्कर्मिभिः प्रार्थितं लब्धमेव। प्रत्यावर्तन्तां भवन्तः सर्वे अस्मात् स्थानादेव। कलहं दूरीकृतं पान्थानाञ्च दुर्दैवं निराकृतम्। सर्वमेव मङ्गलाय विहितम्।

अमिताभः—विजयतामस्माकं सर्वाध्यक्षः, चिरं जीवतु च सः!

आदिशूरः—संस्थाकर्मिणां जय एव मम विजयः!

यन्त्रज्ञा विलसन्तु विश्वकर्मवद् रथकृतिनटाः
दक्षाः सारथयस्तथा प्रधावन्तु विषमसरणौ।
शुल्कार्थं हि नियामका निदध्युश्च पथिषु चरणौ
सर्वेषां परितृप्तये चिरं भान्तु नगरशकटाः ॥१०२॥

गायत भ्रातरः परिवहणसङ्गीतम्! तदेव ददातु नः कर्मोद्दीपनां सदैव।

सर्वे:—( गायन्ति )—

( संस्थासंगीतम् )

नमामि कलिकातापरिवहणसंज्ञसंस्थां
नमामि कृतनगरीपान्थगमनव्यवस्थां
नमामि राष्ट्रपरिवहणसंस्थां
नमामि नौमि ताम् ।
लक्षाधिकमानवजीविकोपायदायिकां
गङ्गातटवासिशतायुतानां
वित्तार्जनचारसाहायकदां
रुग्णातुरदीनजनभ्रमणक्लेशवारकां
नमामि राष्ट्रपरिवहणसंस्थां
नमामि नौमि ताम् ।
यन्त्रज्ञनियोजकचालकस्नेहसंसेविनां
दैनन्दिनजीवनविघ्नहीनत्वनिर्देशिकां
नमामि व्याघ्रवदनचिह्नाङ्कनमण्डितां
नमामि प्राकृतगणचित्ताङ्गनसंस्थितां
नमामि राष्ट्रपरिवहणसंस्थां
नमामि नौमि ताम् ॥१०३॥

( यवनिकापातः )

—इति पञ्चमोऽङ्कः—

* समाप्तमिदं शार्दूलशकटप्रकरणम् *

# छन्दो-निर्घण्टः

| श्लोकाङ्कः | वृत्तम् | श्लोकाङ्कः | वृत्तम् |
|---|---|---|---|
| उत्सर्गः | सुमधुरा | २१ | कन्दुकम् |
| मुखबन्धः | पुष्पिताग्रा | २२ | उपजातिः |
| १ | पाञ्चजन्यम्* | २३ | रुक्मवती |
| २ | असंबाधा | २४ | वियोगिनी |
| ३ | मेघविस्फूर्जिता | २५ | कुसुमलतावेल्लिता |
| ४ | मालिनी | २६ | गीतिस्वना* |
| ५ | पृथ्वी | २७ | शिखरिणी |
| ६ | मणिपुष्पकम्* | २८ | हंसकेलिः* |
| ७ | अनुष्टुभ् | २९ | वातोर्मी |
| ८ | सुघोषः* | ३० | इन्द्रवज्रा |
| ९ | उपगीतिः | ३१ | त्वरावती* |
| १० | वसन्ततिलका | ३२ | ऊर्मिध्वनिः* |
| ११ | गीतिः | ३३ | हरिणी |
| १२ | मत्ता | ३४ | चित्रलेखा |
| १३ | डिण्डिमनिनादः* | ३५ | चक्रस्वना* |
| १४ | मन्दयाना* | ३६ | तूर्यनादः* |
| १५ | हरिणप्लुता | ३७ | मात्रासमकम् |
| १६ | तूणकम् | ३८ | रुचिस्मिता* |
| १७ | श्लथाक्रान्ता* | ३९ | झिल्लीरवः* |
| १८ | नीलकण्ठी* | ४० | शार्दूलविक्रीडितम् |
| १९ | विद्युद्दाम* | ४१ | मालिनी |
| २० | उपेन्द्रवज्रा | ४२ | कुसुमलतावेल्लिता |

| श्लोकाङ्कः | वृत्तम् | श्लोकाङ्कः | वृत्तम् |
|---|---|---|---|
| ४३ | पर्णमर्मरः* | ६८ | शालिनी |
| ४४ | हसन्तिका* | ६९ | भुजङ्गप्रयातम् |
| ४५ | रथोद्धता | ७० | वीचिस्तनितम्* |
| ४६ | सञ्चारिणी* | ७१ | विद्युन्माला |
| ४७ | मञ्जुभाषिणी | ७२ | कलहंसः |
| ४८ | रथकान्तिः* | ७३ | ज्योतिर्लेखा* |
| ४९ | वैश्वदेवी | ७४ | विशिखिनी* |
| ५० | मञ्जरी | ७५ | सुरसा |
| ५१ | अनुष्टुभ् | ७६ | इन्द्रवंशा |
| ५२ | स्रग्विणी | ७७ | मणिमध्या |
| ५३ | शार्दूलललितम् | ७८ | वैतालीयम् |
| ५४ | भुजङ्गसङ्गता | ७९ | रसोल्लासः* |
| ५५ | वंशस्तनितम् | ८० | मालती |
| ५६ | जलधरमाला | ८१ | अनुष्टुभ् |
| ५७ | मन्दाक्रान्ता | ८२ | वायुदूतारावः* |
| ५८ | अनुष्टुभ् | ८३ | राजरोचनम्* |
| ५९ | रुचिरा | ८४ | भुजङ्गप्रयातम् |
| ६० | प्रहर्षिणी | ८५ | शिशिरजल्पनम्* |
| ६१ | लीलाखेलः | ८६ | स्वागता |
| ६२ | असंबाधा | ८७ | बालभाषितम्* |
| ६३ | मध्यक्षामा | ८८ | मन्दाक्रान्ता |
| ६४ | आर्या | ८९ | अनुष्टुभ् |
| ६५ | मालिनी | ९० | वसन्ततिलका |
| ६६ | मेघविस्फूर्जिता | ९१ | रुचिरा |
| ६७ | चन्द्रलेखा | ९२ | स्रग्धरा |

| श्लोकाङ्कः | वृत्तम् | श्लोकाङ्कः | वृत्तम् |
|---|---|---|---|
| ९३ | मत्तमयूरी | १०० | नलिनीकनिका* |
| ९४ | वेगवती | १०१ | कुटजगतिः |
| ९५ | मालिनी | १०२ | चारुक्रीडा* |
| ९६ | चटुला* | १०३ | मणिमाला |
| ९७ | मञ्जुहासिनी | १०४ | लोला |
| ९८ | वासन्ती | १०५ | शार्दूललम्फितम्* |
| ९९ | राजहंसः* | १०६ | गीतिमन्द्रा* |

---

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2; Rs. 1·50 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M. A., B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; (Out of stock).

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2·50 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed by Prof. Durgamohan Bhattacharya, M. A. Rs. 7·50 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagisha—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; (Out of stock).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharana Chakravarti. M. A. Rs. 1·25 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada of Tarkacharya. Rs. 2 ; (Out of stock).

23. **Devisatakam** of Mahamahopadhyaya Krishnanatha Sarvabhauma—Ed. by Pt. Janakinath Shastri. ·75 P. ·62 P ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A. ·50 p.

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kalipada Tarkacharya, Rs. 5.

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 1·50 P ; Rs. 1·25 P ( for members ).

27. **Manavaka-gauravam**—(Drama) by M M Kalipada Tarkacharya, Rs. 2·50 P and Rs. 2. (for members).

28. **Kapala Kundala**—(a drama based on Bankimachandra's Kapala Kundala) by Prof. Bishnupada Bhattacharyya Rs. 1·50 P and Rs. 1·25 P (for members).

29. **Brahmana-Sarvasva**—(A Pre-Sayana Vedic Commentary) of Halayudha. Ed. Prof. Durgamohan Bhattacharya. Rs. 25/-

30. **Natakaparibhasa** of Singabhupala—Ed. by Prof. Dr. Kalikumar Datta Sastri. Rs. 3 ; (Rs. 2 for members).

31. **Daridra-Durdaivam**—(Prahasana) by Pt. Srijiva Nyāyatirtha, Rs. 3 ; (Rs. 2 for members).

32. **Aranyakavilasam**—(khaṇḍakāvyam) by Pt. Jadavendranath Nyāyatarkatirtha, Rs. 3/-

---

*Sanskrit Sahitya Parishat Series No. 25*

**SATYĀNUBHĀVAM**

**( A new Mahākāvya )**

*By*

MAHĀMAHOPĀDHYĀYA KALIPADA TARKACHARYA

*Price Rs. 5/-*

*No. 29*

**BRĀHMAṆA-SARVASVA**

**( A Pre-Sāyaṇa Vedic Commentary )**

*By*

**HALĀYUDHA**

EDITED WITH INTRODUCTION, CRITICAL NOTES INDICES & APPENDICES

*By*

PROF. DURGAMOHAN BHATTACHARYYA

*Price Rs. 25/-*

*OPINIONS*

"A very valuable work"

PROFESSOR RENOU, Paris

"Nice edition...with an inspiring and informative. Introduction". *Indian Historical Quarterly*, vol. xxxvi.

"The present publication will add to the glory of the commendable Research Series initiated by the Parishat. It will win admiration from the lovers of Vedic learning".

*Modern Review*, vol. cxii.

---

Printed by Dr. Gopikamohan Bhattacharya, Secretary, Sanskrit Sahitya Parishat, at Calcutta Oriental Pres[illegible] Panchanan Ghose Lane, Calcutta-9 and p[illegible] same from Sanskrit Sahitya Parishad, 168/1[illegible] Street, Calcutta—4.